श्रीः

श्रीभगवन्महर्षिरमणोपदेशभूता

श्रीवासिष्ठगणपतिमुनिप्रणीता

# श्रीरमणगीता

सव्याख्या




[प्रथमं मुद्रणम्]

श्रीरमणाश्रमः  अरुणाचलः

१९४६

श्रीः

श्रीभगवन्महर्षिरमणोपदेशभूता

श्रीवासिष्ठगणपतिमुनिप्रणीता

प्रकाशाख्यव्याख्यासहिता

# श्रीरमणगीता




श्रीरमणाश्रमसर्वाधिकारिणा

निरञ्जनानन्दस्वामिना

प्रकाशिता

१९४६



[ मूल्यम् १-८-०

# श्रीरमणगीता

## विषयसूचिका

## ॥ ग्रन्थप्रशंसा ॥



गलन्ती गङ्गेयं विमलतरगीतैव महतो
नगाधीशाच्छ्रीमद्रमणमुनिरूपाज्जनिमती ।
पथो वाणीरूपाद्गणपतिकवेर्भक्तहृदयं
समुद्रं संयाति प्रबलमलहारिण्यनुपदम् ॥

—प्रणवानन्दः

# ॥ श्रीरमणगीताप्रकाशपीठिका ॥

ईश्वरः सर्वभूतानामेकोऽसौ हृदयाश्रयः ।
स आत्मा सा परा दृष्टिस्तदन्यन्नास्ति किञ्चन ॥

सा वियोगासहा शक्तिरेका शक्तस्य जाग्रती ।
दृश्यब्रह्माण्डकोटीनां भाति जन्मादि बिभ्रती ॥

यमियं वृणुते दृष्टिर्मार्जारीव निजं शिशुम् ।
स तामन्वेषते पोतः कपिः स्वामिव मातरम् ॥

जयति स भगवान्रमणो
वाक्पतिराचार्यगणपतिर्जयति ।
अस्य च वाणी भगवद्-
रमणीयार्थानुवर्तिनी जयति ॥

अथेयमष्टादशाध्यायी श्रीरमणगीता व्याख्यायते । रमणश्च भगवान्महर्षिररुणा-चलक्षेत्रवासी । गीता च तस्योपदेशभूतं शास्त्रम् । अस्तु नाम तत्त्वदर्शिनो महर्षेरुप-

देशः । स च श्रद्धावतां हृदयानि प्रामाण्यवत्त्वेन समावर्जयन् विजयतां नाम । कुतस्त्वयं गीतेति व्यपदेशः? भगवतो वासुदेवस्योपदेशानां हि गीतेति प्रसिद्धिः । बाढम्, तत्त्वोपदेशपराणामन्यासामप्युक्तीनां क्वचिद्गीतास्थानीयत्वमभ्युपगम्यते । तथाहि भवन्ति राम-हनुमद्-गणेशगीताद्याः । धर्मव्याधोपाख्यानमपि व्याधगीतेति व्याहरन्त्येके । इहापि श्रीरमणीयोपदेशानामध्यात्मबोधपरत्वात् गीतास्थानीयत्वमित्येवमर्थोऽयं व्यपदेशः । शास्त्रस्य प्रामाण्यद्योतनार्थश्च भवति ॥

अस्तु मा वा प्रामाण्यम्, तन्न केवलं नाम्ना निर्वाह्यते, किंतु उपदेष्टुरुपदेशाधिकारसम्पत्त्या । अत एव साक्षात्कृतधर्माणामृषीणां वचसामाप्तवाक्त्वेन लोके सिद्धं प्रामाण्यम् ॥

किं तर्हि आप्तवचनमित्यविमृश्यैव गृह्णीयात्? मैवम् । विमृश्यैव गृह्णीयात्, स्यात्त्ववधिर्विमर्शस्यातीन्द्रियार्थेषु । कियानवधिः?

श्रुतार्थावगमाय प्रत्यक्षानुमानाभ्यां श्रुतार्थान् सामञ्जस्येनोपपादयितुं प्रयतेत । न तु श्रुतं पर्यनुयुञ्जीत । यद्येवमवधिः स्यात् प्रत्यक्षानुमानयोरत्यल्पं भवेत्प्रयोजनम् । न, भूयः प्रयोजनं भवति । प्रत्यक्षानुमानाभ्यामेव ह्यर्थनिर्णयः क्रियते लोके ॥

क्रियतां नाम लोके प्रत्यक्षानुमानाभ्यामर्थनिर्णयः । ते कथमतीन्द्रियार्थेष्वाप्तवचनेषु गृह्यमाणेषु प्रयोजनवती भवतः?

यथेन्द्रियार्थेषु लोके तथाऽतीन्द्रियार्थेष्वपीति ब्रूमः । कथम्? उच्यते ॥

लोके तावत् कश्चिदर्थविशेषं जिज्ञासोः पुरुषस्य यावती मेधा यावाँश्च पूर्वः संस्कारः, तावत्यैव मेधया तावतैव संस्कारेण बोधः प्राप्तो भवति । तेन च संस्कारविशेषो जायते । एवमतीन्द्रियार्थेष्वप्याप्तवचनेन गृह्यमाणेन यावन्मतिसंस्कारं बोधो जायते । तथा जायमानाद्बोधाज्जिज्ञासुः संस्कारविशेषं लभते । अतीन्द्रियार्थविषयकसंस्कारविशेषलाभस्तु तत्त्वविचारप्रयोजको भवति । तद्वान् पुरुषश्च सूक्ष्मविचारनिर्मलतया परिपक्वो जायते ॥

किं तर्हि विश्वास एव गतिर्न प्रत्यक्षमनुमानं वा श्रुतस्याप्तवचनस्य परिग्रहे? नैवम् । यत्र न प्रमाणान्तरं विद्यते, न च विरुध्यते तत्राप्तवचने श्रद्धैव शरणम् । यथा विप्रकृष्टदेशवर्तिनं कमप्यर्थविशेषमदृष्टवान् दिदृक्षमाणः पुरुषस्तमेवार्थविशेषं दृष्टवतः पुरुषस्य वचसि बद्धश्रद्धस्तदुक्तीः प्रत्यक्षानुमानाभ्यां विभाव्य तदध्यवसायार्थं परीक्षायै प्रयतते, क्रियमाणे च परीक्षणे नूत्नः संस्कारो निष्पद्यते, अर्थावगत्युपयुक्तश्च भवति, तथेहापि ॥

इदं च तावल्लोके सिद्धम् । शैशवात्प्रभृत्युपचीयमानैरनुभवैरुत्तरोत्तरसंस्कारविशेषलाभेन पूर्वपूर्वसंस्काराणामुपमर्दः क्वचित्, परिष्कारः क्वचित्, द्रष्टव्यस्य अदृष्टस्यार्थविशेषस्य प्रतिसन्धानं, विदितार्थानां हेयता क्वचित्, क्वचिदुपादेयता, अनिच्छयैव स्वभावतः परित्यागः क्वचित्, क्वचित्परिग्रहश्च सङ्घटन्ते । एवं प्रत्यक्षानुमानाभ्यामेव प्रत्यक्षानुमानयोरवधिरवगम्यते । अतीन्द्रियार्थानधिगन्तुं प्रवर्तमानस्य पुरुषस्य प्रत्यक्षानुमानयोरपर्याप्तिरनुभवसिद्धा ॥

तस्माच्छब्दः प्रमाणमतीन्द्रियार्थावगतौ । अतीन्द्रियार्थं प्राप्तव्यतयाऽभिमन्तुं संस्कारविशेष आवश्यको भवति । स च नैव प्रतिकूलसंस्कारग्रस्ते पुरुषे लब्धावकाशो भवति । संस्कारविशेषानुकूल्यं तु अधिकारित्वाय प्रभवति ॥

कश्चिदाह । शब्दस्य प्रामाण्यं न शङ्कामहे, श्रुतिरेव चेच्छब्दत्वेनाभिप्रेयते । उपपादयति चैवम् ॥

नन्वाप्तानामपि महनीयानां मानुषमात्रत्वात् तदनुभवानां तन्मूलकवचसां भ्रमशून्यत्वं कथं शक्यते निश्चेतुम्? श्रुतिस्तु वेदः, स चानादिरपौरुषेयः परस्य ब्रह्मणो निःश्वसितम् । पुरुषबुद्धिगोचरस्य लोक इव वेदेऽपि वाक्यबन्धस्य ग्राह्यत्वे सिद्धे कथं अनादित्वमपौरुषेयत्वं सम्भवेदिति मा शङ्किष्ठाः । बहोः कालात्प्राप्तत्वादविदितकर्तृकालत्वाद्वा अनादित्वम् ॥

उत्कटोऽयं विचारो यदविदितकर्तृकालत्वादनादित्वं, अनादित्वादपौरुषेयत्वं, अपौरुषेयत्वाद्भ्रमशून्यत्वं चेति ॥

अपरं चाह । ननु मधुच्छन्दःप्रभृतीनां मन्त्रद्रष्टयः पुरुषकर्तृकत्वं मन्त्राणां प्रकाशयन्तीति चेन्नेति ब्रूमः । ते हि परमे व्योम्नि स्वतःसिद्धं ब्रह्मणो निःश्वसितं [illegible] ददृशुर्न चक्रुः । तथा दृष्टाँश्च मन्त्रवर्णानस्मदादिभ्यो लोके ख्यापयामासुः । तस्मान्नैते कर्तारो मन्त्राणां भवितुमर्हन्ति । एवमस्मदभिमतमुपपन्नं यदुक्तं नित्यो वेदः प्रमाणं, नेतरत्तादृशं प्रमाणं भवितुमर्हति भ्रमसम्भवादिति ॥

अत्रेदं ब्रूमः । परमे व्योम्नि नित्यसिद्धस्य तस्यैव [illegible] तद्वाग्विषयमवतीर्णस्य च द्वयोर्विशेषोऽभ्युपगन्तव्यः । अनभ्युपगते विशेषे मानुषमात्रस्य भ्रमसम्भववादस्त्वयोत्थापितः पतत्येव । विशेषेऽभ्युपगते तु अस्मदभिमतप्रोद्बलक एव स्यात्त्वयाऽ[illegible] वादो, यन्मन्यामहे मानुषमात्रस्यापि उन्मीलितमत्यदृष्टेर्महापुरुषस्य नावश्यंभावी भ्रम इति । अत एव साक्षात्कृतधर्माणामृषीणां मन्त्रदृष्टयः परमं प्रामाण्यं भजन्त इति च ॥

अथ महात्मनामपि स्याद्भ्रमसम्भवः, तर्हि [illegible] मन्त्राणामप्यप्रामाण्यमापद्येत । मानुषमात्रत्वं तु समानं नाम सर्वेषां महनीयानाम् । तस्माद्दृष्टाधिगतस्य शब्दत्वात्प्रामाण्यं नानादित्वादपौरुषेयत्वाद्वा । यच्चोक्तं [illegible]हेतुकं वेदानां प्रामाण्यं, तद्धि मन्त्रब्राह्मणस्वरूपवर्णनसापेक्षम् । तत्र बहुधा विप्रतिपत्तिर्भवति । तन्नेह परीक्ष्यते प्रकृतानुपयोगित्वात् ॥

अथापर आह । तत्र तावत्सन्ति बहोः कालादागतानि ऋग्वेदादीनि महान्ति [illegible] । सन्ति च ऋषीणामाद्यानां मधुच्छन्दःप्रभृतीनां [illegible] याभिरधीताभिर्जप्ताभिः क्रियासु यथाविधि विनियुक्ताभिर्यथाकामं पुरुषार्थं लभते, अधिगच्छति वा सर्वदेवात्मभावसायुज्यम् । तथा चौपनिषदानां याज्ञवल्क्यप्रभृतीनां बहुविद्यासाधननिर्दिष्टस्यात्मदर्शनस्योपव्याख्यानानि श्रूयन्ते । अपि च द्वैपायनप्रभृतीनां स्मृतयः [illegible] । एवं प्राचामाचार्याणामर्वाचीनानां चोपदेशा अन्ये च जज्ञीयन्ते । सत्स्वेवं बहुषु शास्त्रेषु प्रतिपद्यमानेषु, किमिहानेनापूर्वेण शास्त्रेण ? ते हि पूर्वे महान्त ऋषयो येषां वाक्यानि पर्याप्तानि परमं चास्माकं प्रमाणं भवितुमर्हन्तीति चेन्न उच्यते—

तत्त्वदर्शिभिरुपदिष्टत्वाच्चिरन्तनत्वाच्च माननीयतमं निगमागमप्रामाण्यम् । यद्यप्येवं तथाऽपि सत्यस्यैकान्तिकत्वं देशकालाभ्यामबाधितत्वं च स्मृतावुपस्थापयितव्ये । यथा लोके शरीरेन्द्रियादिस्वभावप्रवृत्तिरनपोह्या, यथा चेन्द्रियाणां तत्तदर्थग्रहणव्यापारो देशकालाभ्यां न व्यभिचरति, यथा वा गणितादेः शास्त्रसिद्धान्तस्य नियतो व्यवहारः, तथा सर्वेषु कालेषु अध्यात्मतत्त्वान्यनुभूतिमद्भिरुपदिश्यन्ते ॥

अथ लोके तावत् [illegible] दृश्यन्ते । परमार्थविषये शास्त्रे तु वक्तव्यं सर्वं पूर्वैरुक्तम् । नेह वक्तव्यशेषः केनापि शक्यते वक्तुम् । तस्मादवरं प्रामाण्यमस्य ग्रन्थस्य, प्रयोजनं च किञ्चित्करं वैशिष्ट्याभावादिति चेदुच्यते ॥

ऋषिर्मधुच्छन्दास्तुष्टावाग्निमिति न पराशरादयो नास्तुवन् । छन्दोगैराम्नाता प्राणविद्येति अन्ये शाखिनस्तदाम्नानान्नैव निवृत्ताः । ब्रह्मविचारस्तैत्तिरीयकैः कृत इति आथर्वणिकैः क्रियमाणस्य तस्यानर्थक्यं अवरं प्रामाण्यं वा न कोऽपि विद्वान्मन्यते । सर्वासामुपनिषदां ब्रह्मणि समन्वयेऽपि तदधिगमसाधनेषु शाखाभेदेन उपदेशधोरणी प्रयोजनवती दृश्यते ॥

अपि च वक्तव्यं सर्वं पूर्वाचार्यैरुक्तमिति तु सन्दिग्धम् । परमार्थतत्त्वं सारतो दृष्टं बहुधा व्याख्यातमित्यत्र न प्रत्यवतिष्ठामहे । परमार्थतत्त्वानुभूतेः स्वरूपं सारत[illegible] । यद्यप्यखण्डात्मस्वरूपानुभूतिः सर्वत्र काले देशेऽप्यविशेषैव भवति, तथाऽपि [illegible] गृह्यमाणा विवरणविज्ञानप्रवचनेषु बहुमुखी भवति, तत्तत्कालिकस्य भिन्नरुचेर्भिन्नसामर्थ्यस्य जिज्ञासुलोकस्यावश्यकी भवत्युपयुक्ता च । अत एव काले काले प्रादुर्भूतानां [illegible] ब्रह्मविद्यासन्ततिरविच्छिन्ना दृश्यते ॥

अथास्मिन्गीताशास्त्रे रमणनामाङ्किते [illegible], यमधिकृत्य यस्योपदेशवाणीश्च समुद्दिश्य सद्दर्शनव्याख्यावसरे भाष्ये भूमिकायां च वक्तव्यमुपन्यस्तम् ।

तन्नेह पुनः प्रस्तूयते । प्रसक्तस्य ग्रन्थस्यावश्यकतयाऽपेक्षितमुपयुक्तं च जिज्ञासूनां सारतः किञ्चित्सङ्क्षिप्यते ॥

पुरुषार्थस्य चातुर्विध्यं व्यवहारे प्रसिद्धम् । सर्वस्यापि पुरुषस्यात्मस्वरूपसाक्षात्कार एक एव परमोऽर्थः । धर्मार्थकामानां पुरुषार्थत्वं तु प्रायशः पुरुषाणां परिपाकोनतया दुर्बलत्वात् अनिवार्यमुपयुक्तं च भवति । तस्मात्परिपाकसम्पत्तेः प्रागपि श्रेयस्कामेन पुरुषेण परमपुरुषार्थानुकूलतया त्रिवर्गः सम्पाद्येत । अर्थकामयोस्तन्नियामके धर्मे च यावत्परनिःश्रेयसलाभं निवारयितुमशक्येषु, तथा ते विनीयेरन् यथा परमार्थसाधनाङ्गतया विपरिणमेयुः ॥

तस्माद्धर्मार्थकामान् भजमानस्यानुत्पन्नवैराग्यस्यातीव्रजिज्ञासोरपि पुरुषस्य भवति चेदध्यात्मश्रद्धा, तस्य महानुपकारकः स्यान्महर्षेरुपदेशः, येन त्रिवर्गिभिरपि पुरुषैः स्त्रीभिर्वा सर्वैर्वर्णिभिर्वा आश्रमिभिरनाश्रमिभिर्वा अध्यात्मदृष्टिमवलम्ब्य तत्साधनानुकूलतयाऽवस्थातुं शक्यते ॥

अत्रोपदेष्टा श्रीमहर्षिरित्यवोचाम । उपदिष्टास्तु बहवः प्रष्टारः । प्रश्नेषु क्रियमाणेषु प्रत्युत्तरेषु दीयमानेषु स्वतन्त्रतया भगवति महर्षौ प्रवचनं कुर्वति च तदन्तेवासिनामग्रगण्यः सन्निहितोऽभूद्वासिष्ठो गणपतिमुनिराचार्यो, येन प्रश्नोत्तररूपोऽयं ग्रन्थस्तत्काल एव निबद्धः ॥

अथ यदिह भगवानुपदिशति तत् स्वानुभूत्या प्राप्तमवलम्ब्य, अन्तर्ध्यानाद्दृष्ट्वा वा, न तु शास्त्राणि पर्यालोच्य । यद्यपि शास्त्राण्यनाश्रित्य प्रतिवचनानि स्वत उपदेशश्च श्रीमहर्षेर्निर्गच्छन्ति तथाऽप्यस्य वाग्भिः सङ्गतिः शास्त्रीयतत्त्वानां विचारधियां विशदा स्यात् । यत्र क्वचित् सम्प्रदायविरोधस्तात्कालिकधर्मशास्त्रेभ्यो व्यावृत्तिर्वा दृश्येत तत्रापि सर्वेषां परमपुरुषार्थैकलक्ष्याणामनर्घोऽयमर्थनिक्षेपो भवति, अध्यात्मदृष्टिमाश्रित्य सर्वेषां प्रश्नानां विचार्यमाणत्वात् । तदिह व्यवहारे परमार्थे वा अध्यात्मदृष्टिः सर्वेषामाश्रयणीयत्वेनोपदिश्यते । यद्यपि प्रष्टृभेदात्प्रश्नभेदोऽधिकारभेदश्च भवतः, तथाऽपि सर्वेषां प्रश्नोत्तराणामात्मदृष्टावेव समन्वयः प्रदर्श्यते ॥

तस्मादस्य शास्त्रस्य स्वरूपसिद्धिविचारः प्रधानो विषयः । साङ्गिकाश्रमादि-विचारस्य तदङ्गत्वेन प्रतिपादनात् । बोध्यबोधकभावः सम्बन्धः । अध्यात्मश्रद्धा-सम्पन्नोऽधिकारी । परमः पुरुषार्थः प्रयोजनम् ॥

स च पुरुषार्थ एक एव परमः सत्यश्च बोध्यः । अन्येषां धर्मादीनां वस्तुत-स्तत्रैव समन्वयात् । तथा चाहुः शास्त्रविदः, यस्मिँस्तत्त्वं न विहन्यते स भावो धर्म इति ॥ एवं सति, आत्मनः सद्भावावस्थितेस्तत्र निष्ठैव पुरुषस्य परमो धर्मः। आत्मन-श्चित्स्वरूपाहमर्थत्वात् तदवगतिरेव पुरुषस्य परमोऽर्थः । आत्मन आनन्दमयस्य प्रिय-तमत्वात् तत्प्रियतैव पुरुषस्य परमः कामः ॥

एवं त्रैविध्येनाभासमानानां धर्मार्थकामानां पुरुषार्थानां एक एव लक्ष्यः पुरुषार्थः, स च स्वात्मभूते ब्रह्मण्यहमहमिति हृदये स्फुरति नित्यशुद्धबुद्धमुक्तस्वभावे सिद्धः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति भगवतो रमणस्य श्रीमहर्षेरुपदेशानां हृदयम् । यथा चायमर्थः सर्वेषां श्रीरमणीयोपदेशानां तथेह व्याख्यास्यमानायां त्रिशत्यां गीतायां स्पष्टतरं प्रदर्शयिष्यते ॥




# श्रीरमणगीता

## ॥ प्रथमाध्यायः ॥

महर्षिं रमणं नत्वा कार्त्तिकेयं नराकृतिम् ॥
मतं तस्य प्रसन्नेन ग्रन्थेनोपनिबध्यते ॥१॥

अथ व्याचिख्यासितस्य ग्रन्थस्यायमादिमः श्लोको भवति । महर्षिमिति— ग्रन्थस्यादौ स्वगुरवे नमोवाकं ब्रूते । तेन शिष्टसम्मतं मङ्गलमनुष्ठितम् ॥

नराकृतिं नरवेषधरं कार्त्तिकेयं सुब्रह्मण्यं महर्षिं महान्तं तत्त्वदर्शिनं भगवन्तं रमणं एतन्नाम्ना प्रसिद्धं नत्वा प्रणम्य तस्य मतं प्रसन्नेन ग्रन्थेन सरलपथेनानेन सुबोधवाक्यार्थेन उपनिबध्यते विरच्यते मयेति शेषः ॥

नराकृतिं नरस्याकृतिरिवाकृतिर्यस्य तम्, कृत्तिकानामपत्यं कार्त्तिकेयः कुमारः स्कन्दस्तम् । नररूपधरः स्कन्दो महर्षिरित्युक्ते स्कन्दावतारो महर्षिरित्युक्तं भवति । अत्रैक आह । कथमिह कुमारावतारत्वं महर्षेरुच्यते? किमिदं भाक्तमुक्तं, यन्महाकविः

स्वगुरुणा महर्षिणाऽनुगृहीतस्तस्यावतारत्वाख्यानेन प्रशंसति तन्माहात्म्यम्? किमिहावतारत्वात् प्रणामः क्रियते उत गुरुत्वात्? गुरुत्वात् प्रणामः, अवतारस्तु गुरोः स्वरूपम्। न तु गुरुत्वादवताराख्यानं अवतारत्वाद्वा गुरुत्वम् ॥

तर्हि किंप्रमाणकमवतारत्वमिति प्रश्नः । बाढं, महर्षिमधिकृत्य प्राकृतानामेके मन्यन्ते साधुरयमहिंसको विवसनकल्पानां व्युप्तकेशानामेक इति । संस्कृतधियां श्रद्धावतां पुरुषाणां तु तन्नाभिमतम् । आहुरेषामेके साधुरसंशयं विरक्तः सन्न्यासीति । योगविदामग्रगण्य इत्यन्ये सिद्धपुरुषोऽयमात्मविन्नैष्ठिकवरिष्ठ इत्यपरे । आचार्योऽयमस्माकं येनाचार्यवन्तः पुरुषाः स्मामेति केचन । तत्रापि द्वित्राः साक्षाद्गुह एवायं म्रियमाणेष्वमर्त्यो मर्त्येष्वमृतं जीवन्तमात्मानं मुक्तं दर्शयितुमवतीर्ण इति ॥

एवंप्रकारस्य बहुमुखस्य विश्वासस्य न कदाऽपि हेतुः शक्यते वक्तुम् । सर्वत्र काऽप्यन्तःश्रद्धा दृष्टिर्वा प्रमापयति । योगित्वसिद्धत्वादीन्यनुमापयितुं न कान्यपि बाह्यानि लिङ्गानि दर्शयितुं शक्यानि भवन्ति । योगित्वादौ विश्वासजन्मनः परमेव तत्तद्विश्वासवतः पुरुषस्य भूयान्युक्तिपरिकरः स्वाभिमतोपपादकः श्रद्धाभिवर्धनाय सहकारी भवति । तस्माद्यादृशा हेतुना योगित्वादि प्रतीयते, तादृशैवावतारत्वं विश्वस्यत इति वक्तुं युक्तम् ॥

पदवाक्यप्रमाणज्ञः आचार्यः महर्षेरन्तेवासिनां विदुषामादिमोऽग्रगण्यः । बाल्यात्प्रभृति निगमागमाधिगतमन्त्रतन्त्रदेवतातत्त्वसाक्षात्काराय धृतव्रतो भगवन्तं महर्षिमाचार्यत्वेनाश्रितवान् । दर्शनविशेषेण चोदितः श्लोकाष्टकेन स्वगुरुमस्तौषीत् । नभस्तः षट्कृत्वो महर्षौ रमणे ज्योतिरवतीर्णमेकदा दृष्टवान्मुनिर्दर्शनमूलं स्तोत्रं रमणाष्टकमकरोदिति प्रसिद्धिः । तत्र ह्येवं पठ्यते— "द्वित्रास्त्वां गिरिजाङ्कपीठनिलयं जानन्ति देवं गुहम्" इति ॥

अथवा बहोः कालादवतारतत्त्ववेत्तारः कृष्णद्वैपायनप्रभृतयः क्वचित् पुरुषविशेषे विभूतिविशेषं दृष्ट्वा देवांशाविर्भावं वोपलभ्यावतारमाचख्युः । तथा च पार्थस्येन्द्रांशं वासुदेवस्य साक्षाद्विष्णुभावं अन्येषां युधिष्ठिरादीनां अन्यान् देवतांशाँश्च व्याजह्रुः ।

अर्वाचीनाश्च आचार्यशङ्करस्य शिवांशं ब्रुवते । अन्येषामाचार्याणां शेषांश-हनुमदंशादय उच्यन्ते । तथा शैवाश्च वागीशस्य गणेशांशं सम्बन्धमूर्तेः स्कन्दांशं च गायन्ति ॥

एवं वा भवत्ववतारतत्त्वविदां वचनं यदयं भगवान् रमणो महर्षिः स्कन्दावतार इति ॥

कार्त्तिकेयो महासेन इति स्कन्दनामसु पठितत्वात् स्कन्दाभिप्रायेणाह कार्त्तिकेय-मिति । स्कन्दसनत्कुमारयोरव्यतिरेकमामनन्ति छन्दोगाः । तयोर्भेदमाहुः पुराणानि । नायं कुमारस्वरूपनिर्णयस्यावसरः । न वा अवतारतत्त्वविचारस्य । तन्नेह प्रवृत्ताः स्मः श्रुतिवाक्यपुराणवचनपरीक्षया तत्त्वं निर्णेतुम् । इदं त्वलम् । औपनिषदं पक्षमवलम्ब्य स्कन्दो महर्षिरित्याचार्यस्याशयः । तथैवास्माभिरन्यत्र प्रपञ्चितम् ॥

महर्षेर्मतं निबध्यत इत्याह । मतं आशयः, न तु नूत्नः समयविशेष इत्यव-गन्तव्यम् । अत्र हि ग्रन्थे श्रीमहर्षिणा स्वानुभवदृष्टतत्त्वानुरोधेन प्रष्टृभ्यो दत्तानि प्रति-वचनानि तस्याशयं प्रकाशयन्ति ॥

ईशपुत्रशके राम- भूमिनन्दधरामिते ॥
एकोनत्रिंशद्दिवसे द्वादशे मासि शीतले ॥२॥

ईशपुत्रशके इत्ययं द्वितीयः श्लोकः तृतीयेन सहान्वयी । ईशपुत्रस्य क्रीस्तोः शके तज्जन्मारम्भात्संवत्सरगणने रामभूमिनन्दधरामिते रामेति त्रिसङ्ख्या, भूमिरित्येकं, नन्देति नव, धरेत्येकं, एतत्सङ्ख्यामिते १९१३ वत्सरे शीतले हेमन्ते मासि द्वादशे डिसम्बराख्ये एकोनत्रिंशे दिवसे (१९१३ सं०. १२ मा. २९ दि.)

उपविष्टेषु सर्वेषु शिष्येषु नियतात्मसु ॥
भगवन्तमृषिं सोऽह- मपृच्छं निर्णयाप्तये ॥३॥

नियतात्मसु नियता आत्मानो येषां तेषु, न स्वच्छन्दचारिण इत्यर्थः नियमशीला इति यावत् । शिष्येषु अन्तेवासिष्वनुग्रहपात्रेषु उपविष्टेषु समासीनेषु निर्णयाप्तये निर्ण-

यस्य सन्देहध्वंसरूपस्य अध्यवसायस्य प्राप्तये लब्धये सोऽहं प्रश्नविज्ञापनं प्रतिजानानोऽहं अपृच्छं उत्तरश्लोकगतान् प्रश्नानित्यर्थः ॥

अथवा सोऽहमिति तच्छब्देन विशिष्यमाणमहंपदं अपृच्छमिति ग्रन्थविरचन-समये समुपस्थितां प्रश्नकालिकस्मृतिं द्योतयति । तस्मादत्र प्रथमाध्यायगत-प्रश्नकरण-कालो ग्रन्थनिबन्धनकालादन्य इति गम्यते । इदमुत्तरत्राध्यायेषु स्पष्टं भवति ॥

सत्स्वपि बहुषु शिष्येषु जिज्ञासयोपविष्टेषु कविरयमेक एवापृच्छदिति कथितम् । तेनेतरशिष्यजनसंशयप्रहाणमपीष्टम् । अनेन सर्वसम्मतं प्रष्टुः प्रामुख्यं गम्यते । अपि च प्रथमश्लोके गुरोः प्रणामात्परं तस्य मतमुपनिबध्यते मयेत्यध्याहार्यतया विसृष्टं कविना । अहमुपनिबध्नामि मयोपनिबध्यत इत्यसच्छब्दो न प्रयुक्तः । गुरुभक्तेर्विन-याद्वा । इह तु अहमपृच्छमित्याह । ग्रन्थकृतमधिकृत्येतरेषां शिष्याणां हृद्गतं प्राधान्यं द्योतितम् ॥

प्रश्नप्रतिवचनात्मकेऽस्मिन् ग्रन्थे तत्र तत्र कालो दत्तः । इदं च कवेश्चरित्ररसि-कत्वं ज्ञापयति । कालगणने क्रीस्तुशकमवलम्ब्य दत्ताः संवत्सरमासदिवसाः । अनेन पूर्वाचारप्राप्तसंवदादिशक उपेक्षित इति नैष दोषः । इदानीं हि सार्वलौकिकः क्रीस्तु-शको व्यवहारविदामिष्टः अभिज्ञैराद्रियते ॥

अथ प्रश्नाः षडिह पञ्चभिः श्लोकैः 'सत्यासत्यविवेकेने'त्यारब्धा 'अधिगच्छति वा न वे'त्येतदन्ता उपन्यस्यन्ते ॥

सत्यासत्यविवेकेन मुच्यते केवलेन किम् ॥
उताहो बन्धहानाय विद्यते साधनान्तरम् ॥४॥

केवलेन साधनान्तरमन्तरेण सत्यासत्यविवेकेन सत्यं चासत्यं च तयोर्विवेकेन सत्यमात्मा चैतन्यमनन्तं ज्ञानं ब्रह्म, असत्यमनात्मा जडमन्तवत् शरीरं जगद्वा इत्यु-भयोरात्मानात्मनोस्तत्त्वपृथक्करणं यद्विवेचनं तेन विवेकाख्येनेति यावत् । मुच्यते किं

विवेकी जनः बन्धान्मुक्तो भवति किम्? उताहो अथवा बन्धहानाय अविविक्तदेहात्मभावरूपस्य सर्वेषां व्यवहारानुभवसिद्धस्य बन्धस्य हानाय त्यागाय मोक्षायेति यावत्, साधनान्तरं विद्यते अन्यत्साधनं तत्त्वविवेचनजन्यमानसाध्यवसायाद्भिन्नं साधनमस्ति वा?

ननु लघुरयमल्पार्थकः प्रश्नः कृतः। नित्यानित्यवस्तुविवेकादनर्थान्तरं सत्यासत्यविवेकः, स च साधनचतुष्टयान्तर्गतत्वेन प्रसिद्धः, तत्कथमयमस्य साधनतां प्रति संशय उत्थाप्यते? मैवम्। शास्त्रविदामेके ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपं तत्त्वविवेकजातं धीवृत्तिविशेषं ज्ञानं मन्यन्ते। यद्यपि साक्षात्कारो ज्ञानस्वरूपं न तु केवलं बुद्धिनिश्चयात्मकः प्रत्ययविशेष इत्याहुः, तथाऽपि न तत् तत्त्वविचारजन्यान्निश्चयादन्यत्साधनमपेक्षते नित्यसिद्धत्वादात्मनः सत्यवस्तुस्वरूपादिति चाहुः। एवंवादिनां वाचमुपाश्रित्य साधवः केचिज्जिज्ञासवोऽन्धेनैव नीयमाना अन्धा इव पतन्ति। आत्मनो नित्यशुद्धबुद्धमुक्तस्वभावत्वान्नास्ति वस्तुतो बन्धो मोक्षो वेति कृत्वा जगन्मिथ्यात्वे बन्धमिथ्यात्वस्यान्तर्भावान्मोक्षो मनोनिश्चयरूप एवेति प्रतियन्ति। एतादृशाविद्वत्प्रत्ययप्रध्वंसायेह प्रश्ने सत्यासत्यविवेकेनेति प्रयुक्तं न तु नित्यानित्येति। तथोक्ते तु साधनचतुष्टयस्याद्यं साधनमिहाभिप्रेतमिति स्याद्वा भ्रम इति धिया॥

एवमुपन्यस्तः सत्यासत्यविवेक एव ज्ञानं साक्षात्साधनं यस्मान्मोक्षो भवतीति येषां मनीषा तेषां शास्त्रादेव मोक्षसाधनं ज्ञानं लभ्यत इति निश्चयः। तत्र प्रथमप्रश्नानुबन्धी द्वितीयः प्रश्नः किमलमित्यादिना—

**किमलं शास्त्रचर्चैव जिज्ञासूनां विमुक्तये ॥**
**यथागुरूपदेशं कि- मुपासनमपेक्षते ॥५॥**

जिज्ञासूनां सत्यं ज्ञातुमिच्छूनां विमुक्तये शास्त्रचर्चैव किमलम्? किं पर्याप्तो भवति शास्त्रविचारो येन ब्रह्म सत्यं जगन्मिथ्येत्यादि तत्त्वविवेकलाभेन नित्यशुद्धबुद्धमुक्तस्वभाव आत्मेत्यवगम्यते। अथवा यथागुरूपदेशं गुरोराचार्यस्य उपदेशं साधनक्रमज्ञापकमादेशमनतिक्रम्योपासनं साधनं किमपि अपेक्षते आश्रयते किम्? मोक्षाय

शास्त्रचर्चा उपासनसापेक्षा किम्? ज्ञानस्यैव मोक्षसाधनत्वं, तच्च शास्त्रविचारजन्यमेवेत्येकेषामभिमतम् । तच्चोपासननिरपेक्षमित्याहुः । वेदान्तवाक्यं तु "पण्डितो मेधावी गन्धारान्" इत्यारभ्य "आचार्यवान्पुरुषो वेद" इत्याह । तस्मादुद्गतः संशयः किमाचार्यवाचमनुसृत्य उपासनमवश्यं कर्तव्यं, उत केवलं शास्त्रविचार एवालं मोक्षायेति । अतीतस्य प्रश्नद्वयस्यानुबन्धी तृतीयः प्रश्नः स्थितप्रज्ञेत्यादिना श्लोकेन भवति ॥

स्थितप्रज्ञः स्थितप्रज्ञ–मात्मानं किं समर्थयेत् ॥
विदित्वा परिपूर्णत्वं ज्ञानस्योपरतेरुत ॥६॥

यदि सत्यासत्यविवेक एव ज्ञानं मोक्षप्रदं भवेत्, तच्च शास्त्रविचारजन्यं उपासननिरपेक्षं स्यात्, तर्हि शास्त्राल्लब्धविवेक आत्मविदिति सिध्येत् । स आत्मवित् स्थितप्रज्ञाख्यः पुरुषः कथमात्मानं विद्वांसं निश्चिनुत इति प्रश्नः । स्थितप्रज्ञः स्थिता अविषयगता सुदृढमात्मनिष्ठा प्रज्ञा स्मृतिर्यस्य स विद्वान्पुरुषः "आत्मानं स्थितप्रज्ञं परिपूर्णत्वं विदित्वा समर्थयेत्किम्? उत ज्ञानस्योपरतेः?" अहमेवेदं सर्वमित्यात्मनः परिपूर्णत्वबोधेन अहमात्मविदभूवमिति निश्चिनुते किम्, अथवा सर्वस्माज्ज्ञेयाद्बाह्यादान्तराद्वा निवृत्तेः? अहमात्मविद्विषयवृत्तिविज्ञानशून्यतया शान्तोऽस्मीति निश्चिनुते? एवं ज्ञानिगतं आत्मबोधनिश्चयं प्रति प्रश्नविकल्पः कृतः ॥

अथ ज्ञानीति परबुद्धिगतो निश्चयः किंलक्षण इति श्लोकार्धेन चतुर्थः प्रश्नः ॥

ज्ञानिनं केन लिङ्गेन ज्ञातुं शक्ष्यन्ति कोविदाः ॥

ज्ञानिनं आत्मविदं पुरुषं केन लिङ्गेन लक्षणेन कोविदाः धीमन्तः ज्ञातुमवगन्तुं शक्ष्यन्ति? सत्यपि ज्ञानिनो ज्ञानलिङ्गे तन्न पण्डितैः पामरैश्चाविशेषेण ज्ञातुं शक्यते । संस्कारविशेषजन्यसामर्थ्यभेदात् । अतः कोविदा इति प्रयुक्तम् ॥

अथास्य श्लोकस्य उत्तरार्धेन पञ्चमः प्रश्नः ॥

ज्ञानायैव समाधिः किं कामायाप्युत कल्पते ॥७॥

समाधीयतेऽस्मिन्निति समाधिः । सर्वार्थतायाश्चित्तवृत्तिं निवार्य एकाग्रतया वर्तनेन यः स्थितिलाभः स ज्ञानायैव मोक्षसाधनभूताय कल्पते किं प्रभवति किं? उत अथवा कामायापि अभीष्टं साधयितुं प्रभवति वा? समाधिनाऽन्तःकरणप्रवृत्तीनामुपशमेन समाधानेन लभ्यते ज्ञानं, यत्साक्षान्मोक्षसाधनं प्राहुः । स समाधिः किं परमपुरुषार्थस्यैव लाभायोपयुज्यते, उतावरपुरुषार्थस्याभीष्टस्य सिद्धयेऽपि साधनं भवति?

योगिनः किमभीष्टसिद्धिरवश्यंभाविनीति षष्ठः प्रश्नः ॥

कामेन योगमभ्यस्य स्थितप्रज्ञो भवेद्यदि ॥
स कामोऽमुष्य साफल्य- मधिगच्छति वा न वा ॥८॥

कामेन केनाप्यभीष्टेन प्रारम्भकेण योगमभ्यस्य समाधिप्रदं साधनमनुष्ठाय कोऽपि साधकः स्थितप्रज्ञो भवेद्यदि निर्धूतसकलकामोऽपहतपाप्मा मुनिरात्मविद्भवति यदि अमुष्य तस्य योगिनः सः कामः योगस्य प्रारम्भकः स मनोरथः साफल्यमधिगच्छति वा न वा फलितो भवति किं, उत विफलो भवति? स्थितप्रज्ञस्य मौनिनः सर्वेषां कामानामुपसंहारः श्रूयते । अत्र संशयः । योगमनिच्छन्नपि काङ्क्षितमर्थविशेषं साधयितुं योग एव शरणमिति तं साधनतया परिगृह्य अभ्यासबलादारूढस्य पुरुषस्य योगप्रभावात् सर्वकामोपसंहारे जाते योगारम्भनिमित्तभूतस्य कामविशेषस्य का गतिः? एवं प्रश्नषट्कं पर्यालोच्य युगपन्मया क्षिप्तमित्याह ॥

एवं मम गुरुः प्रश्ना- नाकर्ण्य करुणानिधिः ॥
अब्रवीत्संशयच्छेदी रमणो भगवानृषिः ॥९॥

मम गुरुराचार्यः संशयच्छेदी सन्देहध्वंसी श्रीरमणः करुणानिधिर्भगवानृषिरेवं मया क्षिप्तान् षट्प्रश्नान् आकर्ण्य श्रुत्वा अब्रवीद्वक्ष्यमाणानि प्रत्युत्तराणि यथाक्रमं प्रश्ना-

नामिति शेषः । नेह प्रथमं प्रश्नं क्षिप्त्वा प्रतिवचनं गृहीत्वा अनन्तरं द्वितीयः प्रश्नः कृतः, तस्योत्तरं परिगृह्य तृतीयः, एवमन्येऽपि प्रश्ना विज्ञप्ता इति ग्राह्यम् । युगपद्यथाक्रमं षडपि प्रश्नाःसमुदायेन कृताः, येषां प्रतिवचनान्यपि यथाक्रमं दत्तानि । तत्र प्रथमप्रश्नस्य प्रत्युत्तरमाह ॥

मोचयेत्सकलान् बन्धा- नात्मनिष्ठैव केवलम् ॥
सत्यासत्यविवेकं तु प्राहुर्वैराग्यसाधनम् ॥१०॥

केवलं साधनान्तरविरहं आत्मनिष्ठैव आत्मनि सिद्धे अहंप्रत्ययाश्रये सद्वस्तुस्वरूपे निष्ठा दृढा स्थितिरेव सकलान्बन्धानविद्याग्रन्थिरूपान् मोचयेत् विगलितान्कर्तुं शक्नुयात् । नान्यत्साधनमस्ति समस्ताविद्याग्रन्थिबन्धविमोक्षणायेत्येवकारः । तु किं तर्हि शास्त्रविचाराल्लब्धस्य सत्यासत्यविवेकस्य प्रयोजनम् । आह— सत्यासत्यविवेकं उद्देश्यं वैराग्यसाधनं विधेयं प्राहुः । चतुर्थश्लोके व्याख्यातस्वरूपस्य सत्यासत्यविवेचनस्य वैराग्यसाधनतामुपदिशति । सत्यासत्यविवेकस्य वैफल्यं मा शङ्किष्ठा इति तुशब्दः ॥

अनिष्टवस्तुनि विरक्तिरभीष्टवस्तुन्यनुरक्तिजन्मने प्रभवतीति धिया आत्मावगतिसाधनभूतस्य वक्ष्यमाणस्योपासनस्य आत्मेतरवस्तुनि वैराग्यं साधनं भवितुमर्हतीत्याहुः । तस्माद्यद्यपि सत्यासत्यविवेकस्य आत्मावगतिं प्रति साक्षात्साधनत्वं नेह प्रतिपाद्यते, तथाऽपि परम्परासाधनत्वं विशिष्योपयुज्यते । साक्षात्साधनभूतोपासनाभिनिवेशोपकारित्वात् । यस्य तु पक्वपुरुषस्य स्वभावतः परमात्मन्यनुरागः, तस्य वैराग्यसाधनीयं किमपि न विद्यते । अत एवोपासनस्य क्वचिद्वैराग्यं साधनं भवेदिति तस्य प्रयोजनं बोध्यम् ॥ यथा सत्यासत्यविवेकः साधनं भवति वैराग्यस्य, तथा विरक्तिरप्युपास्तेरिति येषां वैराग्यद्वारा ज्ञानसाधनीभूतोपासनाभिनिवेशो जायते, तेषां सत्यासत्यविवेकजन्यं वैराग्यमनिवार्यं प्रयोजनवच्च भवति । येषां तु परमात्मन्यनुरागत उपास्तिः सिध्यति, तेषां सत्यासत्यविवेकेन तज्जन्यजगद्वैरस्यस्वरूपेण वैराग्येण नास्ति प्रयोजनम् । परमात्मानुरक्तौ तदितरविरक्तेरन्तर्भावात् । तथा चाहुरभियुक्ताः । "परमात्मनि

यो रक्तो विरक्तोऽपरमात्मनि" इति । अथ किमिदमुक्तं, यद्वैराग्यस्यैव साधनं सत्यासत्ययोर्विवेचनमिति? किमिदं गूढमुपक्षिप्यते? किं वा जगत्सत्यमपि वैराग्योत्पादनार्थमसत्यमुच्यते? यथा लोके तावत् शिशुं भोक्तुमनिच्छन्तं जननी "जात! भुङ्क्ष्व शीघ्रं एष आगच्छति चोरस्त्वां ग्रहीतुं, अल्प एवायं कवलः, त्वरस्व ग्रस ग्रस" इति मृषा विभीषिकया वत्सं भोजयित्वा स्वेप्सितं साधयति, तथेहापि सत्यमपि जगदसत्यमिति मृषावादो न दोषाय, परमपुरुषार्थभूतात्मस्वरूपजिज्ञासाफलकत्वादिति संशये प्राप्ते, मैवं मंस्थाः इति उत्तरश्लोकेनाह—

सदा तिष्ठति गम्भीरो ज्ञानी केवलमात्मनि ॥
नासत्यं चिन्तयेद्विश्वं न वा स्वस्य तदन्यताम् ॥११॥

ज्ञानी आत्मवित्पुरुषः केवलं अद्वितीयं यथा तथा आत्मनि निजे मूलस्वरूपे परमात्मनि गम्भीरः अभीर्धीरः सदा सन्ततमविच्छेदेन तिष्ठति स्थिरो भवति । नित्यमात्मनिष्ठस्य गाम्भीर्यकैवल्ये सहजसिद्धे भवतः । विश्वमसत्यमिति न चिन्तयेत्, स्वस्य तदन्यतां न ध्यायति, स्वस्य विश्वस्मादन्यतां वा न मनुते । इदं जगदसत्यं, अस्मात् जगतोऽहं पृथगस्मीति न मन्यते । नित्यमात्मस्वरूपे सुप्रतिष्ठितस्य दृष्टेः सर्वस्य जगतः सर्वेषां भूतानां च आत्मस्वरूपादनन्यभावः प्रसन्नो भवति । 'ऐतदात्म्यमिदं सर्वं' इति हि श्रूयते । आत्मनिष्ठस्य आत्मस्वरूपाज्जगतोऽनन्यभावदृष्टौ सिद्धायां, कथं तस्य जगतः सत्यत्वमसत्यत्वं वा ध्यानविषयतां भजते? आत्मस्वरूपादन्यस्याविद्यमानत्वात् । अनात्मविदा जनेन आत्मेतरत्वेन गृह्यमाणं जगत् आत्मविदा पुरुषेण आत्मस्वरूपादनन्यत्वेन गृह्यते । अभावस्याविद्यमानत्वात् आत्मस्वरूपस्याखण्डपरिपूर्णभावरूपत्वाच्च सहजात्मनिष्ठासम्पन्ने पुरुषे अभावस्य तद्ध्यानस्य वा कुतोऽवकाशः? अथवा रुचकादेः स्वर्णमिव जगतः कारणं परमस्याद्वितीयस्यात्मनः स्वरूपं पश्यन्मुनिः कथं जगतः पृथक्सत्तामसत्यतां वा पश्येत्?

ननु सुषुप्तस्य पदार्थाग्रहणात् जगदिदं अस्ति नास्तीति वा प्रतीतेरसम्भवः, यथा च जाग्रत एव पुरुषस्य कमप्यर्थमेकाग्रतया ध्यायतो विषयान्तरग्रहणस्मरणानवकाशात्

विषयान्तरं प्रति नास्त्यस्तीति वा न विद्यते तत्कालप्रत्ययः, तथा आत्मस्वरूपावस्थितस्य पुरुषस्य विश्वं प्रति ताटस्थ्यात् विश्वमिदमसत्यमित्युच्येत चेन्न तथा भ्रमितव्यं, 'न वा स्वस्य तदन्यताम्' इत्युक्तम् । उपपद्यते चैवं, 'आत्मैवेदं सर्वं' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा,' 'यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूत्' इत्यादि । सद्दर्शनेऽप्येवमुपदिष्टम्—

अज्ञस्य विज्ञस्य च विश्वमस्ति पूर्वस्य दृश्यं जगदेव सत्यम् ।
परस्य दृश्याश्रयभूतमेकं सत्यं प्रपूर्णं प्रविभात्यरूपम् ॥ इति॥

अथ द्वितीयप्रश्नस्योत्तरमाह—

**न संसिद्धिर्विजिज्ञासोः केवलं शास्त्रचर्चया ॥**
**उपासनं विना सिद्धि- र्नैव स्यादिति निर्णयः ॥१२॥**

विजिज्ञासोर्विज्ञातुमिच्छोरात्मकामस्य मुमुक्षोरिति यावत्, केवलं साधनान्तरवर्जं शास्त्रचर्चया शास्त्रविचारेणैवेत्यर्थः, संसिद्धिर्न आत्मलाभरूपाभीष्टसिद्धिर्न भवति । किं तर्हि सिद्ध्ये प्रभवति? आह । 'उपासनं विना सिद्धिर्नैव स्यादिति निर्णयः' सिद्धिं प्रति उपासनस्यावश्यकत्वनिर्णायकमिदमुत्तरं भवति । शास्त्रविचारस्यानर्थक्यमिह नेष्टम् । अतः केवलं शास्त्रचर्चया न सिद्धिः स्यादित्युक्तम् । किञ्चित्करमपि प्रयोजनं शास्त्रविचारस्य वर्तते अध्यात्मविषयकसंस्कारजनकत्वात्तस्य । किं तु शास्त्रविचारेण विनाऽपि सिद्धेः सम्भवोऽवगन्तव्यः, न तूपासनं विना । अकृतविद्यानामपि आत्मविद्यासिद्धिर्लोके दृष्टा जेजीयते, किमुत अनधीतवेदवेदान्तानाम्?

किं पुनस्तदुपासनं येन विना सिद्धिर्न भवेत्? आह—

**अभ्यासकाले सहजां स्थितिं प्राहुरुपासनम् ॥**
**सिद्धिं स्थिरां यदा गच्छे- त्सैव ज्ञानं तदोच्यते ॥१३॥**

इहोपासनस्वरूपमपृष्टमप्युपदिश्यत इति मा भूत् संशयः । अनतिक्रान्तगुरूपदेशत्वविशिष्टमुपासनमधिकृत्यैव द्वितीयः प्रश्नः कृतः, न तूपासनं प्रत्यविशेषेण । तत्र

तावत्सन्ति वैदिकान्युद्गीथप्राणपञ्चाग्निविद्याद्युपासनानि, पञ्चाक्षराष्टाक्षरादिजपध्यानरूपाण्यन्यान्युपासनानि च । एवं बहुषु सत्सु विप्रतिपत्तिर्न स्यादिति स्वोद्दिष्टोपासनस्वरूपं स्वयमेव भगवान्महर्षिर्निर्णयति । अभ्यासकाले साधनसमये सहजां स्थितिं अयत्नतः स्वभावतः सिद्धां निष्ठां उपासनं प्राहुः उपासनं वदन्त्यात्मविद इति शेषः । इदं च स्वमतमुपासनं आत्मविदामभिमतमिति विवक्षया प्राहुरित्युक्तम् । तदेवोपासनं अप्रयाससिद्धसहजस्थितिरूपं अभ्यासबलाद्यदा स्थैर्यं प्राप्य सिद्धं भवति, तदा सैव स्थितिः आत्मस्वरूपज्ञानपदवाच्या भवति, 'यदा स्थिरां सिद्धिं गच्छेत्' उपासक इति शेषः । तदा सैव स्थिरा सिद्धिरेव ज्ञानमुच्यते । उपासनं ज्ञाने पर्यवस्यतीत्यर्थः । अभ्यासकालीनसहजस्थितिरूपं उपासनस्य प्रतिपादितम् । अथ केयं सहजा स्थितिः कथं साऽभ्यस्य प्राप्येतेति सत्यां जिज्ञासायामाह—

**विषयान् सम्परित्यज्य स्वस्वभावेन संस्थितिः ॥**
**ज्ञानज्वालाकृतिः प्रोक्ता सहजा स्थितिरात्मनः ॥१४॥**

विषयानिन्द्रियार्थान् स्थूलान् सूक्ष्मान् बाह्यानान्तरान्वा परित्यज्य वर्जयित्वा उपेक्ष्येत्यर्थः, स्वस्वभावेन विषयवृत्तिवर्जं स्वस्वरूपेण संस्थितिः अवस्थानं ज्ञानज्वालाकृतिः ज्ञानस्य चित्स्वरूपस्य ज्वालेव दीपस्याग्नेर्वाऽर्चिरिव स्थिता आकृतिः रूपं यस्याः सा 'आत्मनः सहजा स्थितिः प्रोक्ता' निर्विषयतया स्वस्वरूपावस्थानं सहजा स्थितिः । तस्याः रूपं ज्ञानज्वालेत्युक्तम् । निरस्ताशेषविषयवृत्तिकायां सहजस्थितौ स्वतःसिद्धं चिदाख्यं स्वरूपज्ञानमवशिष्यते । अत एव सहजस्थितेर्ज्ञानं स्वरूपमिति ज्ञापनाय ज्ञानज्वालाकृतिः सा स्थितिरित्युक्तम् । नेह ज्ञानज्वालाया आकृतिरिवाकृतिर्यस्याः सेति विग्रहो वाच्यः । सहजस्थितौ चित्स्वरूपादन्यस्यासत्वात् । अथ ज्ञानज्वालेत्यत्र ज्वालशब्दः स्वयंप्रकाशार्थः प्रकाशकत्वद्योतनार्थश्च गौणः प्रयुक्तः । न च सहजात्मनिष्ठायां यदवशिष्यते चिन्मयं स्वरूपं तत्पाषाणवद्भवतीति ज्ञेयम् । यद्यपि तन्निर्वृत्तिकं, तथाऽपि निरन्तरा तत्राहंस्फूर्तिरिति ग्राहयितुं ज्वालपदं प्रायुञ्जि । इयं चाहंस्फूर्तिराविद्यकाहंवृत्तेरन्येत्युत्तरत्र प्रपञ्चयिष्यते । एवं भगवता महर्षिणा स्वानुभवदृष्टं विदुषामभिमतं च उपासनस्यावश्यकतोपदेशप्रसङ्गे तत्स्वरूपमुपदिष्टम् ॥

अथ तृतीयप्रश्नस्योत्तरमाह—

**निर्वासनेन मौनेन स्थिरायां सहजस्थितौ ॥**
**ज्ञानी ज्ञानिनमात्मानं निःसन्देहः समर्थयेत् ॥१५॥**

निर्वासनेन निर्गता वासना यस्मात्तेन मौनेन निःशब्दलक्षणेन सहजस्थितौ स्थिरायां चाञ्चल्याभावेन सुप्रतिष्ठायां सत्यां 'ज्ञानी ज्ञानिनमात्मानं निःसन्देहः समर्थयेत्' ज्ञानसिद्धः पुरुषः स्वात्मानं स्वरूपज्ञानसम्पन्नं निःसंशयतया निश्चिनुत इत्यर्थः । स्वात्मज्ञानस्यापरोक्षानुभूतित्वात् सन्देहगन्धस्यापि नास्त्यवकाश इति भावः । अत्र सहजस्थितौ स्थैर्यसम्पादकत्वं मौनस्य प्रतिपादितं तृतीयान्तेन मौनपदेन, मौनस्वरूपं च निर्वासनविशेषणोपादानेन द्योतितम् । मौनं निःशब्दलक्षणमित्यवोचाम न तत्केवलं वाचंयमत्वम् । न वा मूर्च्छादाविव मनोनैश्चल्यरूपं, नापि निर्वृत्तिकं केवलं शिलावदवस्थानम् । विहितवासनाक्षयं प्रध्वस्ताशेषतमस्कं जाज्वल्यमानचिद्रूपं अचलप्रतिष्ठयाऽवस्थानमेव मौनं भवितुमर्हति । यत्र पूर्वानुभवजन्याः स्मृतिहेतवः पूर्वापरपरामर्शविवर्ज सहसोत्पद्यमानक्रोधादिवृत्तिविशेषहेतुभूताश्चित्तगतसंस्कारविशेषा वासनापदवाच्याः क्षीणा भवन्ति । अत एव ज्ञानोदयाद्वासनाक्षयं प्राहुर्विज्ञाः । तादृशज्ञानोदयसम्पन्नस्य मौनस्यैव सहजनिष्ठायां स्थैर्यसम्पादकत्वमुपपद्यते । अत्र द्राविडवाण्यां अरुणाचलशिवस्तुतौ अक्षरमणमालागीतं भवति । तदिह संस्कृतगिरोदाहरामः—

"मौनिनाऽऽस्थितं विकसितं न चेन्मौनमुच्यतां किमु शिलोपमम् ॥" इति ॥

एवं सहजात्मस्थितौ ज्ञानोज्ज्वलस्य निर्वासनमौनस्य अखण्डपरिपूर्णत्वात् परिपूर्णत्ववेदनस्य सवासनाविद्यकज्ञानोपरतेश्च तत्रान्तर्भावो गम्यः । अनेन, 'विदित्वा परिपूर्णत्वं ज्ञानस्योपरतेरुत' इति प्राश्निकविकल्पः प्रत्युक्तो भवति ॥

अथ चतुर्थप्रश्नस्य प्रत्युत्तरमाह श्लोकार्धेन—

**सर्वभूतसमत्वेन लिङ्गेन ज्ञानमूह्यताम् ॥**

सर्वभूतसमत्वं सर्वेषु भूतेषु समत्वं तेन लिङ्गेन लक्षणेन ज्ञानं स्वात्मनिष्ठारूपं ऊह्यतां तर्क्यतां अवगम्यतामिति यावत् । नेह लिङ्गं ऊह्यतामिति ऊहपदसाहचर्यात् तार्किकैर्व्यवहृतं व्याप्तिविशिष्टपक्षधर्मताविशिष्टहेतुरिति बोध्यम् । लीनार्थस्य गमकं ज्ञानिनोऽसाधारणं चिह्नमेवाभिप्रेतम् । तच्च लिङ्गं ज्ञानिगतसर्वभूतसमत्वरूपं कथितम् । साक्षात्कृतात्मस्वरूपो हि ज्ञानी पुरुषः सर्वेषु भूतेष्वात्मसाम्यं पश्यति । भिन्नेषु भूतेषु आत्मैकत्वस्वरूपदृष्ट्या अभेदस्थितिरेव समत्वस्य रूपम् । बलेन मनसा देहेन तद्व्यापारेण च भिद्यमानेषु भूतेषु तत्राभेदरूपा समत्वदृष्टिर्ज्ञानिनः सिद्धैवेत्यसंशयम् । ईदृशं समत्वं ज्ञानलिङ्गं अन्तर्दृष्टिगोचरं अपक्वधियां दुर्बोधं प्रत्युत्तरतया प्रतिपादितम् । नेदं बाह्यं लक्षणम् । कथमिदं तर्हि ज्ञानिनो ज्ञानस्य ज्ञापकं भवितुमर्हति? अन्तर्मुखमनोभिः संस्कारविशेषसम्पन्नैरनुगृहीतैर्वा सुकृतिभिरेवेदं ज्ञानिगतसमत्वरूपज्ञानलिङ्गं अवबोद्धुं शक्यते । उपपन्नं चेदमुत्तरं, यतो "ज्ञातुं शक्ष्यन्ति कोविदाः" इति प्रश्नः । तस्मात् सर्वेषामविशेषेण प्राकृतधियामपि बोधक्षमं बाह्यं ज्ञानलिङ्गं न कदाऽपि शक्यते वक्तुमित्यवगन्तव्यम् ॥

अथ पञ्चमप्रश्नस्योत्तरमाह श्लोकस्योत्तरार्धेन—

**कामारब्धः समाधिस्तु कामं फलति निश्चितम् ॥१६॥**

कामारब्धः कामेनेषणविशेषेणारब्धः उपक्रान्तः समाधिर्योगरूपश्चित्तसमाधिरेकाग्रतासाध्यः निश्चितं दृढसङ्कल्पेन निर्णीतपूर्वं काममभीष्टं फलति फलितं करोति । दृढसङ्कल्पेन निर्णीतमभीष्टं योगसमाधिना साधितं भवतीत्यर्थः । फलतिक्रियाविशेषणत्वेन निश्चितपदं व्याख्यातुं शक्यम् । तर्हि सिद्धिरसंशयं भवति तस्य कामस्य येन योग आरब्ध इति भावः । येन केनापि निमित्तेन दार-पुत्र-वित्तेषणादिना आरभ्यमाणे योगे एकाग्रतारूपसाधने प्रचलति योगप्रारम्भकस्य कामितार्थस्योपस्थितिश्चित्ते न सम्भवति । एकाग्रतया ध्यायतः पुंसः कामितोऽकामितो वा विषयश्चित्तेऽवकाशं लभेत चेत् एकाग्रतायाः क्षतिरेवेत्यनुक्तसिद्धम् । चित्तेऽनुपस्थितविषयवृत्तावेव हि समाधिः सम्पद्यते । तथा समाधिलाभे सति, योगप्रारम्भनिमित्तस्य कामविशेषस्य का गतिरिति षष्ठे प्रश्ने कृते उत्तरमाह—

कामेन योगमभ्यस्य स्थितप्रज्ञो भवेद्यदि ॥
स कामोऽमुष्य साफल्यं गच्छन्नपि न हर्षयेत् ॥१७॥

कामं फलति निश्चितमिति समाधिः फलवान् ज्ञानायेव कामायापीति अतीत-प्रश्नोत्तरमुक्तम् । इह तु योगमनिच्छतोऽपि पुरुषस्य अभीष्टसिद्धये गत्यन्तरमनुपलभमानस्य, अत एव तमारब्धवतः साधनबलात् स्थितप्रज्ञतायां निष्पन्नायां, तस्य निष्कामता अनिवार्यतया सम्पद्येत । कथं तर्हि निर्धूतकामस्य कामावाप्तिरिति शङ्कायामाह । पूर्वार्धं स्पष्टम् । अमुष्य कामेन योगमारब्धवतो जनस्य कामो मनोरथः साफल्यं गच्छन्नपि फलितोऽपि न हर्षयेत्तमित्यध्याहार्यम् । तस्य हर्षं न जनयेदित्यर्थः । आत्मस्वरूपानन्दनिमग्नं कथमाविद्यको हर्षादिभावो गाहते?

॥ इति प्रथमोऽध्यायः ॥

# ॥ द्वितीयोऽध्यायः ॥

अथ स्वल्पविस्तरोऽप्ययमध्यायः सर्वेषामध्यायानां शिरोऽवतंसो भवति । त्रिभिः श्लोकशतैराचार्यो गणपतिमुनिरुपनिबद्धवानेतां गीताम् । त्रिशतश्लोकमालायामस्यां मणिनायकस्थानीया मालिनीवृत्तकलिता भगवतः श्रीरमणस्य महर्षेः स्वतः प्रवृत्ता अर्थानुधाविता वागमृतात्मप्रभां प्रसारयन्ती छान्दस्यां दाशतय्यां गायत्रीवैका जिज्ञासुभिर्भजनीयशब्दार्था विभ्राजते । सा च 'हृदयकुहरे'त्युपक्रान्ता 'भवत्व'मित्येतदन्ता पद्यरूपा भवति । तत्र प्रथमं तद्विनिर्गमकालमाह—

ईशपुत्रशके बाण- भूमिनन्दधरामिते ॥
चातुर्मास्ये जगौ सारं सङ्गृह्य भगवानृषिः ॥१॥

क्रीस्तुशके १९१५ संवत्सरे चातुर्मास्ये श्रावणादीनां चतुर्णां मासानां मध्ये कदाचित् मासस्य दिवसस्य वा निश्चेतुमशक्यत्वात् । भगवान्रमणः ऋषिः द्रष्टा सारं तत्त्वसारं सङ्गृह्य सङ्क्षिप्य जगौ गीतवान् वक्ष्यमाणं पद्यमिति शेषः । महर्षिरिति

प्रसिद्धस्य भगवतो रमणस्य ऋषित्वमिहोक्तं न न्यूनत्वाय भवति, साकूतत्वादृषिपदोपादानस्य । अनधीतसंस्कृतसाहित्यस्य भगवतो रमणस्य स्वानुभूतिदृष्ट्या सृष्टं हीदमाद्यं संस्कृतपद्यम् । तस्मादिह ऋषिपदमौचित्यं पुष्णाति । सेयं पद्यात्मिका वाग्भवति ॥

**हृदयकुहरमध्ये केवलं ब्रह्ममात्रं**
**ह्यहमहमिति साक्षादात्मरूपेण भाति ॥**
**हृदि विश मनसा स्वं चिन्वता मज्जता वा**
**पवनचलनरोधादात्मनिष्ठो भव त्वम् ॥२॥**

हृदयकुहरमध्ये हृदयमिति कुहरं सुषिरं आकाशो गुहेति यावत् । सम्भावनाकर्मधारयः समासः । तस्य मध्ये अन्तरे हृदयाकाश एव सूक्ष्मस्तस्याप्यन्तरे इति अत्यन्तसूक्ष्मत्वं गहनत्वं वा द्योतयति । केवलमेकं निर्विशेषं ब्रह्ममात्रं ब्रह्मैव ब्रह्ममात्रं मात्रमवधारणे भाति स्वयं प्रकाशते । कथम्? साक्षात् अपरोक्षतया आत्मरूपेण सर्वस्याप्यहंप्रत्ययस्याश्रयो यः सन्नात्मा तस्य रूपेण वृत्तिप्रकाशरूपेण अहमहमिति नैरन्तर्येणाहंस्फूर्तितया भातीति सम्बन्धः । अद्वितीयमेकं ब्रह्मैव सर्वभूतहृदयदेशे आत्मस्वरूपेणापरोक्षेण अहमहमित्यविच्छिन्नस्फुरणेन भासत इत्युक्तम् । 'हि' इति प्रसिद्धौ । अहङ्कारवृत्तिः सामान्यतः प्रसिद्धत्वेऽपि, ब्रह्मण एवाहंस्फूर्तितया हृदये भानं आत्मवित्सु प्रसिद्धम् । अथवा 'ही' आश्चर्ये । आश्चर्यमेवैतत् यदिदं ब्रह्म सर्वेषां भूतानां आत्मत्वेन हृद्यन्तः सन्ततमहमहमिति ज्वलदपि, सर्वासां चित्तवृत्तीनामाश्रयत्वेनावस्थितमपि जनाः परोक्षज्ञाना एवाविद्यायामन्तरे वर्तन्ते । अथ च आश्चर्यमेवैतद्ब्रह्म । तथा हि श्रूयते– "आश्चर्यवत्पश्यति कश्चिदेनम्" इत्यादि । एवं 'ही अहम्' इति युक्तः पदच्छेदः ॥

अहंस्फूर्तिरूपिण्याः स्वरूपज्ञानवृत्तेरन्यैवाविद्यकाहङ्कृतिरित्यवगन्तव्यम् । "अथाहमन्यत्स्फुरति प्रकृष्टं नाहङ्कृतिस्तत्परमेव पूर्णम्" इति सद्दर्शनोपदेशो भवति ॥

एवं ब्रह्मैव सर्वेषामात्मा सन् हृदयेऽहंस्फूर्तिरूपेण भातीति प्रतिपाद्य तदवगति-साधनमुत्तरार्धेनाह । हृदि हृदये स्वं आत्मानं विश प्रविशेत्युपदेशः । केन साधनेन? मनसा चिन्वता मज्जता वेति विकल्पः । स्वमूलगवेषणान्मनो हृद्यात्मानं प्रविशति । 'गवेषणात्प्राप्य हृदन्तरं तत्पतेदहन्ता परिभुग्नशीर्षा' इति हि सद्दर्शनोक्तिः । स्वजन्मस्थाने हृदये मज्जनेनापि अहङ्कृतिमूलरूपमात्मस्वरूपं विन्देत् । पवनचलनरोधाद्वा सम्भाव्यमुपायान्तरमुक्तम् । कुम्भकरूपेण प्राणसंयमनेन वा हृदयस्थमात्मानं प्रविश्य 'आत्मनिष्ठो भव त्वम्'' आत्मनिष्ठा सहजा स्थितिर्यस्य स तादृशस्त्वं भवेत्यधिकारिणं शिष्यं प्रति आदेशः । मज्जता मनसा चिन्वता वा प्राणरोधेन वा आत्मस्वरूपलाभो भगवता महर्षिणा सद्दर्शनेऽप्युपदिष्टः । ''कूपे यथा गाढजले तथाऽन्तर्निमज्ज्य बुद्ध्या शितया नितान्तम् । प्राणं च वाचं च नियम्य चिन्वन्विन्देन्निजाहङ्कृतिमूलरूपम् ।।'' इति ।।

अथेमां महर्षेराद्यां छन्दोबद्धां गैर्वाणीं वाणीं उत्तरश्लोकेन सङ्क्षेपतः स्तुत्वा तदनन्तरैश्चतुर्भिः श्लोकैस्तामेव समासेन विषयविभागपूर्वकं व्याचष्टे ग्रन्थकृदाचार्यः ।।

**श्लोकं भगवतो वक्त्रा- न्महर्षेरिममुद्गतम् ।।**
**श्रुत्यन्तसारं यो वेद संशयो नास्य जातुचित् ।।३।।**

भगवतो महर्षेः श्रीरमणस्य वक्त्रात् मुखादुद्गतं निःसृतं श्रुत्यन्तसारं वेदान्तसारभूतं श्लोकं हृदयकुहरेति प्रस्तुतमिमं यः पुरुषः वेद जानाति तस्य विदुषः जातुचित् कदाचिदपि न संशयो भवतीत्यध्याहार्यम् । ब्रह्मात्मभाववेदनसाधनोपदेशकस्यास्य जिज्ञासुगतसंशयच्छेदकत्वं प्रतिपादितम् ।।

**अत्र श्लोके भगवता पूर्वार्धे स्थानमीरितम् ।।**
**शारीरकस्य दृश्येऽस्मिन् शरीरे पाञ्चभौतिके ।।४।।**

अत्र श्लोके भगवता महर्षिणा पूर्वार्धे पादद्वये पाञ्चभौतिके पृथिव्यादिभूतपञ्चकपिण्डे दृश्ये स्थूले गोचरे अस्मिन् इदन्ताश्रये शरीरे देहे शारीरकस्य अहन्ताश्रयस्य पुरुषस्य

आत्मनः अहमहमिति स्फुरतः स्थानं हृदयकुहरमध्यं ईरितं कथितम् । देशकालावच्छिन्ने शरीरे इदंभावाश्रये दृश्ये विषये देशकालानवच्छिन्नस्य अहंभावाश्रयस्य आत्मनो द्रष्टुर्विषयिणो भानस्थानं हृदयं समीरितं प्रतिपादितम् । शारीरकस्य शरीरे स्थानमुक्तम् । न तु शरीरे हृदयस्य, तत्तु हृदयविद्याध्याये भगवता निर्देक्ष्यते ॥

तत्रैव लक्षणं चोक्तं द्वैतमीशा च वारितम् ॥
उक्तं चाप्यपरोक्षत्वं नानालिङ्गनिबर्हणम् ॥५॥

तत्रैव तस्मिन्पूर्वार्धे एव लक्षणं चोक्तं नैरन्तर्येणाहंरूपतया भानं स्वरूपलक्षणत्वेन प्रतिपादितमित्यर्थः । ईशा ईश्वरेण द्वैतं द्वयोर्भावः द्विता द्वितैव द्वैतं वारितं निवारितं ब्रह्मण एवात्मस्वरूपेण भानात् जीवेश्वरभेदो निवारित इत्यर्थः । नानालिङ्गनिबर्हणं नानालिङ्गानां वेदान्तवाक्यतात्पर्यनिर्णायकलिङ्गानां अनेकेषां आत्मस्वरूपप्रतिपादकानां लिङ्गशब्दवाच्यलक्षणानां चिह्नानामिति यावत् । तेषां निबर्हणं विनिवारकम् । परोक्षत्वं प्रत्यक्षत्वं चाप्युक्तम् । सर्वस्यापि लोकेऽहमस्मीति प्रतीतेरात्मनोऽपरोक्षत्वे सिद्धे, आत्मतात्पर्यबोधकश्रुतिलिङ्गानां तत्रानुपयोगित्वं बोध्यम् ॥

उपदेशो द्वितीयार्धे शिष्याभ्यासकृते कृतः ॥
त्रेधा भिन्नेन मार्गेण तत्त्वादैक्यं समीयुषा ॥६॥

द्वितीयार्धे हृदि विशेत्यारब्धे उत्तरपादद्वये त्रेधा भिन्नेन त्रिविधेनेत्यर्थः । तत्त्वात् वस्तुतः ऐक्यमेकतामेव समीयुषा प्राप्नुवता मार्गेणोपायेन शिष्याभ्यासकृते शिष्यलोकसाधनार्थं उपदेशः कृतः । आत्मस्वरूपप्रापको मार्गः मज्जनेन मार्गणेन प्राणरोधनेनेति त्रिधोपक्रम्यमाणोऽपि एक एव पर्यवसन्नो भवतीत्यर्थः ॥

उपायो मार्गणाभिख्यः प्रथमः सम्प्रकीर्तितः ॥
द्वितीयो मज्जनाभिख्यः प्राणरोधस्तृतीयकः ॥७॥

मार्गणाभिख्यः अन्वेषणाख्यः प्रथम उपायः सम्प्रकीर्तितः । मज्जनाभिख्यो द्वितीय उपायः । तृतीयस्तु प्राणरोधः । मार्गत्रयमिदं पूर्वमेवोक्तं स्पष्टम् ॥

॥ इति द्वितीयोऽध्यायः ॥

# ॥ तृतीयोऽध्यायः ॥

दैवरातस्य संवाद माचार्यरमणस्य च ॥
निबध्नीमस्तृतीयेऽस्मि न्नध्याये विदुषां मुदे ॥१॥

दैवरातस्य प्रष्टुर्भक्तस्य आचार्यरमणस्य महर्षेः संवादं चलितं प्रश्नोत्तररूपं अस्मिन् तृतीयेऽध्याये विदुषां मुदे पण्डितानां प्रीतये निबध्नीमो विरचयामः ॥

दैवरात उवाच—

किं कर्तव्यं मनुष्यस्य प्रधानमिह संसृतौ ॥
एकं निर्धार्य भगवान् तन्मे व्याख्यातुमर्हति ॥२॥

इह लोके संसृतौ जनन-मरणात्मिकायां मनुष्यस्याविशेषेण सर्वस्यापि प्राप्तमनुष्यत्वस्य प्रधानं मुख्यं कर्तव्यं किम्? मानवजन्मलाभस्य प्रयोजने निर्दिष्टे तत्साधनोपाय आश्रयितव्य इति कृत्वा मुख्यकर्तव्यं पृच्छति । येन ज्ञातेन फलं तत्साधनमुभयमपि ज्ञातं भवति, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन । भगवान् महर्षिः एकं निर्धार्य कर्तव्यत्वेन विहितानां मध्ये यन्मुख्यं तदेकं निश्चित्य मे मदर्थं व्याख्यातुमर्हतीति प्रार्थना ॥

भगवानुवाच—

स्वस्य स्वरूपं विज्ञेयं प्रधानं महदिच्छता ॥
प्रतिष्ठा यत्र सर्वेषां फलानामुत कर्मणाम् ॥३॥

महदिच्छता मनुष्येण महत्त्वकाङ्क्षिणेत्यर्थः, स्वस्य स्वरूपं स्वात्मस्वरूपं विज्ञेयं अपरोक्षानुभूतिरूपं ज्ञानं प्राप्तव्यमित्यर्थः। मनुष्यसामान्यस्य कर्तव्यं पृष्टम्। प्रत्युत्तरे तु महदिच्छता मनुष्येणेति विशेषणोपादानेन स्वरूपविज्ञानेऽधिकारो द्योतितः। स च महत्त्वकामरूपः महच्च ब्रह्म यस्मात्परतरं न विद्यते। ब्रह्मणः आत्मस्वरूपत्वात् तत्प्राप्तिः स्वरूपसाक्षात्काररूपं ज्ञानं भवति। तदिच्छा जिज्ञासापदवाच्येह मनुष्यस्य महत्त्वकाङ्क्षिणोऽधिकारित्वाय कल्पते। नेहाजिज्ञासूनाममहत्त्वकाङ्क्षिणां प्राधान्येन कर्तव्यमुक्तम्। यद्यपि सर्वेषामपि अत्यन्तश्रेयस्करं कर्तव्यं स्वात्मस्वरूपविज्ञानसाधनं, तथाऽपि तत्साधनस्य परिपाकविशेषायत्तत्वात् प्रतिवचने स्वरूपप्रेप्सारूपमधिकारं गमयितुं विशेषणमुपात्तम्। यत्र स्वरूपे विज्ञेये सर्वेषां फलानां कर्मफलानां कर्मणामुत कर्मणामपि प्रतिष्ठा भवतीति शेषः। क्रियमाणस्य सर्वस्यापि कर्मणः साधनविशेषस्य वा फलानि आत्मस्वरूप एव प्रतिष्ठितानि। न केवलं फलानि, कर्माण्यपि कर्त्रधीनतया आत्मन्येव प्रतिष्ठितानि भवन्ति। अत्रोपदेशसारो भवति— "कर्तुराज्ञया प्राप्यते फलम्। कर्म किं परं कर्म तज्जडम्॥"

अथ भगवदुक्तं मुख्यकर्तव्यमात्मस्वरूपविज्ञानं कथं प्राप्येतेति तदुपायं पृच्छति दैवरातः॥

दैवरात उवाच—

> **स्वस्य स्वरूपविज्ञाने साधनं किं समासतः ॥**
> **सिद्ध्येत्केन प्रयत्नेन प्रत्यग्दृष्टिर्महीयसी ॥४॥**

स्वस्य स्वरूपविज्ञाने स्वात्मलाभरूपे समासेन सङ्क्षेपेण साधनं किम्? केन प्रयत्नेनोद्यमविशेषेण महीयसी उत्कृष्टतरा प्रत्यग्दृष्टिरन्तर्मुखी स्वात्मदृष्टिः सिद्ध्येत् सिद्धा भवेदिति प्रश्नः। ब्रह्मविद्याङ्गत्वेन बहून्युपासनानि श्रुतिषु गीतानि भवन्ति। साक्षात्कृतात्मस्वरूपाश्च एकस्मिन्नपि साध्ये बहून्मार्गान्निर्दिशन्ति। तत्र सारभूतमेकं मार्गमनुगृह्णातु भगवानिति याचते॥

अथ द्वाभ्यां श्लोकाभ्यामुत्तरमाह ॥

भगवानुवाच—

विषयेभ्यः परावृत्य वृत्तीः सर्वाः प्रयत्नतः ॥
विमर्शे केवले तिष्ठे दचले निरुपाधिके ॥५॥

स्वस्य स्वरूपविज्ञाने साधनं तत्समासतः ॥
सिद्ध्येत्तेनैव यत्नेन प्रत्यग्दृष्टिर्महीयसी ॥६॥

विषयेभ्यो रूपादिभ्य इन्द्रियार्थेभ्यो भोग्येभ्यो वृत्तीश्चित्तवृत्तीः सर्वाः सकलाः प्रयत्नतः अभ्यासयत्नेन परावृत्य निवार्य, विक्षिप्तां चित्तवृत्तिं सर्वार्थतायाः विनिवार्य एकाग्रतायां स्थापयित्वा, अचले निश्चले निरुपाधिके विमर्शे आलोचने अनुसन्धानदृष्टि-रूपे केवलं अन्यनिरपेक्षं तिष्ठेद्वर्तेत । तत्समासतः सङ्ग्रहेण स्वस्य स्वरूपविज्ञाने साधनं भवति । तेनैव यत्नेन महीयसी प्रत्यग्दृष्टिः सिद्ध्येत् । निरुपाधिविमर्शरूपा निरालम्बो-पास्तिरेव प्रत्यग्दृष्टिपर्यवसाना आत्मस्वरूपविज्ञाननिष्ठा भवतीति महदिदं साधनं मानवस्य मुख्यकर्तव्यतया समासेनोपदिष्टम् ॥

दैवरात उवाच—

यावत्सिद्धिर्भवेन्नृणां योगस्य मुनिकुञ्जर ॥
तावन्तं नियमाः कालं किं यत्नमुपकुर्वते ॥७॥

मुनिकुञ्जर मुनिश्रेष्ठ यावत् यावता कालेन नृणां नराणां योगस्य सिद्धिर्भवेत, तावन्तं नियमाः अभ्यासदेशकालादयो यत्नं साधनविषये क्रियमाणं परिश्रमं उपकुर्वते किमिति प्रश्नः । नियताहारतादयः "शुचौ देशे समासीनः" इत्यादयो नियमाः शास्त्रेषु प्रसिद्धाः प्रयत्नोपकारकाः किमिति पृष्टो भगवानाह—

प्रयत्नमुपकुर्वन्ति नियमा युञ्जतां सताम् ॥
सिद्धानां कृतकृत्यानां गलन्ति नियमाः स्वयम् ॥८॥

युञ्जतां योगमभ्यस्यतां सतां सत्पुरुषाणां नियमाः देशकालाहारव्यवहारव्यवस्थात्मकाः प्रयत्नमुद्यमं उपकुर्वन्ति प्रोद्बलयन्तीत्यर्थः । कृतकृत्यानां कृतमनुष्ठितं कृत्यं कर्तव्यं यैस्तेषां तमसः पारदृश्वनां महापुरुषाणां नियमाः स्वयं गलन्ति, अयत्नपूर्वकं स्वतश्च्युतानि भवन्ति । अस्ति तु नियमानां साधनोपकारकत्वं, आविद्यकस्वच्छन्दचारित्वनियमनस्यैष्यमाणत्वात् । सिद्धस्य स्वात्मनियतस्य विदुषस्तु न कोऽपि नियामको नियमोऽपेक्ष्यते, मन्तुं वा शक्यते ॥

दैवरात उवाच—

केवलेन विमर्शेन स्थिरेण निरुपाधिना ॥
यथा सिद्धिस्तथा मन्त्रै र्जप्तैः सिद्धिर्भवेन्न वा ॥९॥

निरुपाधिना केवलेन स्थिरेण विमर्शेन प्रागुक्तेन निरालम्बोपासनेन यथा सिद्धिः भवति या सिद्धिरात्मस्वरूपवित्तिरूपा भवति तथा सिद्धिर्जप्तैर्मन्त्रैर्भवेन्न वा, सा सिद्धिः मन्त्रजपैर्भवेद्वा न वेति प्रश्नः । तन्त्रशास्त्रेषु मन्त्रविशेषाणां पुरश्चरणस्य क्वचिदात्मज्ञानं मोक्षो वा फलश्रुतिर्भवति । तस्मान्मन्त्रजपो देवताप्रसादद्वारा वा आत्मस्वरूपनिष्ठां साधयेद्वा न वेति पृच्छति ॥

भगवानुवाच—

अचञ्चलेन मनसा मन्त्रैर्जप्तैर्निरन्तरम् ॥
सिद्धिः स्याच्छ्रद्दधानानां जप्तेन प्रणवेन वा ॥१०॥

अचञ्चलेन चाञ्चल्यरहितेन स्थिरेणेति यावत्, मनसा जप्तैर्मन्त्रैर्जप्तेन प्रणवेन वा मन्त्रविशेषजपेन प्रणवजपेन वा श्रद्दधानानां जप्तृणां सिद्धिः स्यात् भवेत् । अत्रेदमुक्तं भवति । तत्र तावत्सन्ति सिद्धिविधायकाः केचन नियमाः यैर्विना मन्त्रजपैर्न सिद्धिः स्यात् । ते चेमे भवन्ति । अचञ्चलं स्यान्मनो येन मन्त्रो जप्यते । जपस्यापि नैरन्तर्यं स्यात् । जप्तुः पुरुषस्य जपेन सिद्धिरवश्यम्भाविनीति श्रद्धा वर्तेत । एवं मनोनैश्चल्य-

जपनैरन्तर्य-जपश्रद्धाभिर्विशिष्टेन मन्त्रस्य प्रणवस्य वा साधनेन सिद्धेर्निष्पत्तिर्नान्यथेति भावः ॥

अथ जपेन स्वस्वरूपावस्थानप्रकारमुक्त्वा स्वाभिमतसाक्षात्साधने तस्य पर्यवसान-मुपपादयति भगवान्महर्षिः ॥

वृत्तिर्जपेन मन्त्राणां शुद्धस्य प्रणवस्य वा ॥
विषयेभ्यः परावृत्ता स्वस्वरूपात्मिका भवेत् ॥११॥

मन्त्राणां जपेन शुद्धस्य केवलस्य प्रणवस्य ओङ्कारस्य जपेन वा साधनेन विषयेभ्यो दृश्येभ्यः परावृत्ता विनिवृत्ता वृत्तिश्चित्तवृत्तिः स्वस्वरूपात्मिका स्वात्माकारा भवेत् । चित्तवृत्तेरेकाग्रतायां सिद्धायां विगतविक्षेपायास्तस्याः स्वमूलक्षेत्र एवावस्थितिरुपपद्यते । अत एव स्वस्वरूपात्मिका भवेदित्युक्तम् ॥

ईशपुत्रशके शैल- भूमिनन्दधरामिते ॥
सप्तमे सप्तमे सोऽयं संवादोऽभवदद्भुतः ॥१२॥

भगवन्महर्षि-दैवरातयोः सोऽयमद्भुतः संवादः क्रीस्तुशके १९१७ संवत्सरे सप्तमे जूलैमासि सप्तमे दिवसेऽभवत् ॥

॥ इति तृतीयोऽध्यायः ॥

## ॥ चतुर्थोऽध्यायः ॥

अथास्मिन्नध्याये ज्ञानस्वरूपं कथ्यते । इह ग्रन्थकृदाचार्य एव प्रष्टा । तच्चोत्तरत्र श्लोकेषु स्पष्टं भवति । तत्र प्रथमं द्वाभ्यां श्लोकाभ्यां प्रश्नः क्रियते ॥

अहं ब्रह्मास्मीति वृत्तिः किं ज्ञानं मुनिकुञ्जर ॥
उत ब्रह्माहमिति धी र्धीरहं सर्वमित्युत ॥१॥

अथवा सकलं चैतद् ब्रह्मेति ज्ञानमुच्यते ॥
अस्माद्वृत्तिचतुष्काद्वा किं नु ज्ञानं विलक्षणम् ॥२॥

इह ज्ञानस्य स्वरूपं प्रति चतुर्धा विकल्पितः प्रश्नः । किं अहं ब्रह्मास्मीति वृत्तिः ज्ञानं भवतीत्येकः प्रश्नविकल्पः । उत ब्रह्माहमिति धीरिति द्वितीयः । अथवा अहं सर्वमिति धीर्ज्ञानं भवतीति तृतीयः । चतुर्थो विकल्पस्तु सकलं चैतद्ब्रह्मेति वृत्तिर्वा ज्ञानस्य स्वरूपं भवतीति ॥

अहं ब्रह्मास्मीति वेदान्तवाक्याज्जायमानया अन्तःकरणप्रकाशपरिणामविशेषरूपया वृत्त्या प्रपञ्चसहिताज्ञाननिवृत्तिः सैव मोक्ष इत्याहुः । अत्र संशयः । किं अहंप्रत्ययाश्रये स्वात्मनि ब्रह्मदृष्टिरुद्दिष्टा, उत सर्वज्ञे सर्वशक्ते ब्रह्मण्युभयलिङ्गे सगुणे निर्गुणे वा स्वात्मदृष्टिरित्याद्ययोः प्रश्नयोर्विकल्पः । अथ तृतीय-चतुर्थप्रश्नयोर्विकल्पो भवति । किं अहं सर्वमिति धीर्ज्ञानमुच्यते, अथवा सकलं चैतद्ब्रह्मेति? 'अहमेवेदं सर्वमसानि', 'आत्मैवेदं सर्वम्' इत्यादि श्रूयते । तथा 'सर्वं खल्विदं ब्रह्म' इति च । अत्र सन्देहः । किमहमेव सर्वमिति वृत्तिर्ज्ञानं भवति, उत ब्रह्मैव सर्वमिति वृत्तिर्ज्ञानं भवति?

अथ अस्मात् एवमुक्ताद्वृत्तिचतुष्कात् आत्मनि ब्रह्मदृष्टिर्ब्रह्मण्यात्मदृष्टिः सर्वस्मिन् आत्मदृष्टिः सर्वस्मिन्ब्रह्मदृष्टिरित्येताभ्यो वृत्तिभ्यश्चतसृभ्योऽपि ज्ञानं किं नु विलक्षणम्? ज्ञानस्य उक्तवृत्तिचतुष्कवैलक्षण्यमस्ति चेत् तदनुगृह्यतामित्यभ्यर्थना ॥

इमं मम गुरुः प्रश्ना नन्तेवासिन आदरात् ॥
आकर्ण्य रमणो वाक्य मुवाच भगवान्मुनिः ॥३॥

अन्तेवासिनः शिष्यस्य मम प्रश्नान् गुरुराचार्यो भगवान् रमणो मुनिरादरात् प्रीतिपूर्वकमाकर्ण्य निशम्य वाक्यमुवाच प्रत्युत्तरमदात् उत्तरश्लोकेनेत्यर्थः ॥

वृत्तयो भावना एव सर्वा एता न संशयः ॥
स्वरूपावस्थितिं शुद्धां ज्ञानमाहुर्मनीषिणः ॥४॥

एताः सर्वा वृत्तयो भावना एव अत्र न संशयः । अहंब्रह्मास्मीत्याद्याः वृत्तयोऽन्तःकरणपरिणामविशेषाः शास्त्रजन्यसंस्कारनिष्पन्ना अपि भावनात्वेनैवावस्थिताः । इदमसंशयमिति प्राह । एवकारेण वृत्तीनां भावनारूपमात्रेण भावनानां सर्वासां अज्ञातमूलस्वरूपत्वादेव स्वव्यापारसिद्धिरिति ज्ञापितम् । भावना च भवितुर्भवनस्यानुकूलो भावयितुर्व्यापारः । भावयितृनिष्ठ-भवितृप्राप्य-भवनानुकूलव्यापारस्य मानसक्रियारूपत्वात् न कदाऽपि भावनात्मिका वृत्तिर्ज्ञानं भवितुमर्हति । अतो वृत्तेर्वैलक्षण्यं ज्ञानस्याह । शुद्धां स्वरूपावस्थितिं ज्ञानमाहुरिति शुद्धां निर्वृत्तिकां स्वरूपावस्थितिं स्वरूपे स्वात्मस्वरूपे अवस्थितिं सिद्धां स्थितिं ज्ञानं अपरोक्षानुभूतिरूपं प्राहुः आत्मविद इति शेषः । किं तर्हि अहंब्रह्मास्मीत्यादिवेदान्तवाक्यतात्पर्यवृत्तीनां आत्मस्वरूपावस्थानात्मकज्ञानसम्पादकत्वं नेत्युच्यत इति चेन्न, संस्कृतानामपि प्रकाशानां वृत्तीनां भावनारूपत्वात् भावनानामसाक्षात्कारत्वेन साध्यविषयत्वात्, ज्ञानस्य च साक्षात्काररूपत्वात् सिद्धस्वरूपत्वाच्च, वृत्तेर्विलक्षणमेव ज्ञानमित्युपपादितम् । किमिह शास्त्रस्यानर्थक्यं द्योतितमिति मा भूत् शङ्का । अविद्यायां वर्तमानस्य देहात्माभिमानिनः पुरुषस्य यथा भावनारूपा वृत्तिः संसारहेतुर्भवति, तथा मोक्षप्राप्तेरपि हेतुरिति सिद्धान्ते, वृत्तिः साक्षान्मोक्षसाधनं न भवति, चित्तस्यानुकूलसंस्कारसम्पादनद्वारा प्रभवति ज्ञानाय, यस्मादेव मोक्षः, न तु साक्षात् अहं ब्रह्मास्मीति वृत्तेः इति वक्तव्यम् । अत एव भगवता महर्षिणोपदिष्टो विचारो निरालम्बाहंमूलविचारः, न तु मानसो विचारोऽहंब्रह्मास्मीत्यादिः । आद्यस्तु साक्षात्साधनभूतः भावनानिरपेक्षोऽहंमूलान्वेषणादिना स्वरूपपर्यवसायी । द्वितीयस्तु मानसकृतः सालम्बो भावनाधीनः वृत्तिरूपेणैवावस्थितः, न साक्षात् ज्ञानं भवितुमर्हति । "सोऽहंविचारो वपुरात्मभावे साहाय्यकारी परमार्गणस्य" इति सद्दर्शनवाक्यमपीममर्थमाह । इहैव पूर्वत्र शास्त्रविचारो मोक्षाय नालं, स चोपासनमात्मविचाराख्यं अहंमूलान्वेषणादिप्राप्यं ज्ञानज्वालाकारं सहजात्मस्थितिरूपमिति प्रतिपादितम् । शास्त्रचर्चाया आत्यन्तिकं फलं अहंब्रह्मास्मीत्यादिः भावनाधीना वृत्तिरेवेति, तन्नालं तद्विलक्षणमेव

ज्ञानमिति च साक्षात्साधनोपदेष्ट्रा भगवता महर्षिणा प्रतिपादितमवगन्तव्यम् ॥

गुरोर्वचनमाकर्ण्य संशयच्छेदकारकम् ॥
अपृच्छं पुनरेवाह मन्यं संशयमुद्गतम् ॥५॥

संशयच्छेदकारकं गुरोर्वचः वृत्तयो भावना एवेत्युत्तरमाकर्ण्य पुनरेवोद्गतं उत्थित-मन्यं संशयमपृच्छम् ॥

वृत्तिव्याप्यं भवेद्ब्रह्म न वा नाथ तपस्विनाम् ॥
इमं मे हृदि सञ्जातं संशयं छेत्तुमर्हसि ॥६॥

तपस्विनां नाथ योगीन्द्र ब्रह्म वृत्तिव्याप्यं भवेन्न वा? ब्रह्मणो वृत्त्युपहितचैतन्य-विषयत्वं स्याद्वा न वेति इमं हृदि मनसि हृदो मनःपर्यायत्वान्नेह हृदयकुहरं मतम् । सञ्जातं उत्पन्नं संशयं छेत्तुमर्हसि । निवारयितुं प्रसन्नो भवेति याचते ॥

तमिमं प्रश्नमाकर्ण्य मित्रमङ्घ्रिजुषामृषिः ॥
अभिषिच्य कटाक्षेण मामिदं वाक्यमब्रवीत् ॥७॥

अङ्घ्रिजुषां निजपादश्रितानां मित्रं हितकारी ऋषिर्भगवान् तमिमं ब्रह्म वृत्ति-व्याप्यं न वेति प्रश्नमाकर्ण्य श्रुत्वा कटाक्षेणाभिषिच्य करुणापूर्णावलोकनेन मामिदं वाक्यमब्रवीद्वक्ष्यमाणेन स्वात्मभूतमित्यादिनोक्तवानित्यर्थः ॥

स्वात्मभूतं यदि ब्रह्म ज्ञातुं वृत्तिः प्रवर्तते ॥
स्वात्माकारा तदा भूत्वा न पृथक् प्रतितिष्ठति ॥८॥

वृत्तिर्भावनारूपाऽपि स्वात्मभूतं सर्वस्यापि आत्मत्वेनावस्थितं ब्रह्म कर्म, ज्ञातुं बोद्धुं प्रवर्तते यदि, तदा वृत्तौ अहमाश्रयत्वेन स्वात्मभावेन स्थितं ब्रह्म ज्ञानविषयीकर्तुं प्रवर्तमानायामेव सा स्वात्माकारा स्वात्मन उदिता तद्रूपैव भूत्वा पृथक् न प्रतितिष्ठति,

पार्थक्याभावेन स्वात्मन्येव प्रतिष्ठिता भवति, तां स्वात्माकारवृत्तिमेव शास्त्रे वृत्तिज्ञान-माहुः । तामेवाहंस्फूर्तिमाह भगवान्महर्षिः । आत्मस्वरूपस्य ज्ञानात्मकत्वे तदाकार-वृत्तिरेव ज्ञानमपरोक्षानुभूतिरित्युच्यते । नेयमहंवृत्तिरहङ्कृतिर्भवति । उत्तरत्र चेदं प्रप-ञ्चयिष्यते ॥

संवादकालमाह—

अयं प्रागुक्त एवाब्दे सप्तमे त्वेकविंशके ॥
अभवन्नौ मितग्रन्थः संवादो रोमहर्षणः ॥९॥

१९१७ संवत्सरे जूलै मासि एकविंशके दिवसे स्वल्पविस्तरोऽयं संवादोऽभूदिति स्पष्टम् ॥

॥ इति चतुर्थोऽध्यायः ॥

## ॥ पञ्चमोऽध्यायः ॥

अथ भगवतो महर्षेः स्वतन्त्रोपन्यासोऽयं हृदयविद्याध्यायो व्याख्यायते । तत्रादौ प्रवचनकाल उच्यते ॥

प्रागुक्तेऽब्देऽष्टमे मासि नवमे दिवसे निशि ॥
उपन्यसितवान् सम्य गुद्दिश्य हृदयं मुनिः ॥१॥

प्रागुक्तेऽब्दे १९१७तमे वत्सरे आगस्ट्मासि नवमे दिने निशि रात्रौ मुनि-र्महर्षिः हृदयमुद्दिश्य अधिकृत्य सम्यक् समीचीनतया स्पष्टवचनैरित्यर्थः, उपन्यसितवान् व्याख्यातवान् ॥

निर्गच्छन्ति यतः सर्वा वृत्तयो देहधारिणाम् ॥
हृदयं तत्समाख्यातं भावनाऽऽकृतिवर्णनम् ॥२॥

द्वितीयाध्याये हृदयकुहरेति महार्घे महर्षिनिगदिते पद्ये पाञ्चभौतिके शरीरे आत्मनः स्थानत्वेन हृदयं प्रतिपादितम् । इह तु शरीरे हृदयस्य स्थानं निर्दिशति, तच्च षष्ठे श्लोके वक्ष्यति । इह प्रथमं द्वाभ्यां श्लोकाभ्यां हृदयं लक्षयति ॥

यतः यस्माद्देहधारिणां शरीरिणां सर्वाः निखिलाः वृत्तयो मनोवृत्तयो निर्गच्छन्ति तत् हृदयं समाख्यातं उक्तम् । आकृतिवर्णनं हृदयस्याकृतिकथनं भावना मानसी वृत्तिः । सर्ववृत्तिजन्मस्थानं हृदयमित्युक्ते सर्ववृत्त्युपसंहारोऽपि तत्रैवेति विवक्षा । तथा सति, हृदयपुण्डरीकं हृदयगुहासुषिरं सूक्ष्मं 'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा' इत्याद्याकारवर्णनस्य भावनागम्यतया आकृतिवर्णनस्य भावनात्मकोपास्त्युपयोगित्वं बोध्यम् । न तु भावनामूलान्वेषणरूपोपास्त्युपयोगित्वमिति हृदयलक्षणकथनावसरे आकृतिवर्णनं भावनात्मकमित्यभिप्रेत्याह । भावनाया उपरतेरेव हृदयं ज्ञातुं शक्यते इत्याशयः । यद्यपि शरीरे हृदयस्य स्थानमत्यन्तं सूक्ष्ममस्त्येव, तथाऽपि तद्वृत्त्युपसंहारेणैव ग्रहीतुं शक्यते नान्यथेति वृत्त्युपसंहारप्रकारमाह—

> अहंवृत्तिः समस्तानां वृत्तीनां मूलमुच्यते ॥
> निर्गच्छति यतोऽहंधी हृदयं तत्समासतः ॥३॥

समस्तानां वृत्तीनामहंवृत्तिर्मूलमुच्यते । यतोऽहंधीर्निर्गच्छति तत् समासतो हृदयं इति योजना । अनन्तानां वृत्तिविशेषाणां यदेकं वृत्तिसामान्यं आश्रयत्वेन मूलभूतत्वेन चावस्थितं तदेवाहंवृत्तिरूपमिति ग्राह्यम् । अयमाशयः । मनुष्योऽहं ब्राह्मणोऽहं काणोऽहं बधिरोऽहं शुक्लोऽहं तिष्ठामि गच्छामि देवदत्तोऽहं यज्ञदत्तोऽहमित्यादौ मनुष्यत्वादिविशिष्टोऽहं काणत्वादिविशिष्टः शुक्लत्वादिविशिष्टः स्थितिगतिक्रियावत्त्वादिविशिष्टः अहमस्मीति प्रत्ययसामान्यस्य प्रसिद्धेः, जातिक्रियागुणद्रव्यात्मकचित्तवृत्तिविशेषाणां सर्वेषां च सत्ता अहंधीमूलैव सिद्धा । एवं सर्वत्र सामान्यभूतां अहंवृत्तिं वर्जयित्वा न कोऽपि वृत्तिविशेषः प्रवर्तते । तस्मात्सर्ववृत्तिनिर्गमस्थानमित्यापाततः पूर्वश्लोकेनोक्त्वा, इदानीं सर्ववृत्तिमूलाहंधियो निर्गमस्थानं हृदयमिति सङ्ग्रहेण कथितम् ॥

हृदयावगतेः साक्षात्साधनं अहंधीमूलान्वेषणं गम्यत्वेन हृदयलक्षणे निविष्टम् । आकृतिवर्णनजन्यवृत्तिविशेषेण न स्यात् साक्षादवगतिरिति च फलितम् । तस्मात्तस्य दक्षिणतो धामेत्यादिना वक्ष्यमाणेऽपि हृदयस्य स्थाने, नैव सूक्ष्मवस्तुदर्शनसाधनेन आधुनिकयन्त्रसाहाय्येन दृग्गोचरं भवतीति ज्ञेयम् । अनुभवैकवेद्यत्वात् हृदयस्य प्राप्त्युपायव्यञ्जकं लक्षणं प्रतिपादितमित्यलम् ॥

**हृदयस्य यदि स्थानं भवेच्चक्रमनाहतम् ॥**
**मूलाधारं समारभ्य योगस्योपक्रमः कुतः ॥४॥**

हृदयस्य पूर्वोक्तलक्षणलक्षितस्य अहंधीमूलस्वरूपस्य अनाहतं चक्रं एतदाख्यं योगिभिरुक्तानां षण्णां चक्राणां मध्ये मूलाधारादारभ्य चतुर्थं चक्रं स्थानं भवेद्यदि, मूलाधारं षट्चक्रपथस्यादिमं मूलाधाराख्यं चक्रमारभ्य योगस्य कुतः कस्माद्धेतोरुपक्रमः प्रारम्भो भवेदिति शेषः । अनाहतचक्रं हृदयं न भवतीति विवक्षयाऽयं प्रश्नः कृतः । तत्रैव योगस्योपक्रमः स्याद्यत्रैव योगसाधनं परिसमाप्यते । अहंधीमूलस्थानं हृदयमित्युक्तत्वात् अहङ्कृतिमूलान्वेषणमेव योगस्योपक्रमो भवति । अहंवृत्तिविलयनादहंस्फूर्तेरुदयश्च योगसाधनस्य परिसमाप्तिरूपा सिद्धिश्च भवति । एवं साधनस्य सिद्धेश्च एकमेव स्थानं भवति । तच्च हृदयमिति भगवतो महर्षेराशयः । किं तर्हि तन्त्रशास्त्रप्रसिद्धं योगमार्गिणां विदितं हृदयत्वेनाख्यातं अनाहतचक्रं केवलं काल्पनिकमनात्मविद्भिरेवोदितं निरसनीयमिति चेन्न, योगिभिरुपास्यत्वेन भेद्यत्वेन च प्रतिपादितानां षण्णां चक्राणां मध्ये मध्यमाख्यसूक्ष्मवाक्स्थानमनाहतं, हृदयमित्युक्तमपि, तद्वर्णनोपासनफलश्रवणादौ आत्मस्फूर्तिस्थानात् हृदयादन्यदेवेति विचारधियां विस्पष्टं भवेत् । तथा चोक्तं षट्चक्रनिरूपणे द्वाविंशे श्लोके —

"तस्योर्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्वलं
काद्यैर्द्वादशवर्णकैरुपहितं सिन्दूररागान्वितैः ।
नाम्नाऽनाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥"

इत्यारभ्य अनाहतचक्रोपासनप्रकारं निरूप्य फलं चोक्तं षड्विंशे श्लोके— 'ध्यायेद्यो हृदि पङ्कजं सुरतरुम्' इत्यारभ्य, "वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशे क्षमः ॥" इति ॥ तथा चानन्दलहर्यामपि— "समुन्मीलत्संवित्कमलमकरन्दैक-रसिकम्" इत्यारभ्य अनाहताख्यहृदयध्यानप्रस्तावे— "यदालापादष्टादशगुणितविद्या-परिणतिः" इति च कथ्यते। किञ्च पृथिव्यादिभूतपञ्चकमनस्तत्त्वात्मकानि मूलाधारादि-षट्चक्राणीति तन्त्रशास्त्रेभ्योऽवगम्यते । अत एव सर्वत्र अनाहताख्यं हृदयं वायुतत्त्वा-त्मकमिति योगिनः कथयन्ति । "महीं मूलाधारे" इत्यानन्दलहरीश्लोके— "हृदि मरुतम्" इति पठितम् । एवं अनाहतपदवाच्यहृदयस्य स्वरूपोपास्तिफलानि आत्म-स्वरूपभूतहृदयस्य स्वरूपोपास्तिप्रकारफलेभ्यो भिन्नान्येवेति सिद्धम् ॥

तस्माद्यदिह भगवता महर्षिणा हृदयकुहरमध्य इत्यादावभिप्रेयते तदेव "हृद्यन्तः समुद्रे" इत्यादौ मान्त्रवर्णिके, "स य एषोऽन्तर्हृदय आकाशः", "शतं चैका च हृदयस्य नाड्यः", "यदिदं पुण्डरीकं वेश्म दहरो वा आकाशः", इत्यादावुपनिषदि, "ईश्वरः सर्वभूतानां हृद्देशे", "हृत्स्थं ज्ञानासिनाऽऽत्मनः" इत्यादौ हरिगीतायां च उपदिष्ट-मित्यसंशयं, सर्वसंशयच्छेदकस्वात्मज्ञानरूपफलैक्यादित्यलम् । अनाहतमधिकृत्य ग्रन्थ-कृदाचार्यः राजयोगसारसूत्रे पश्चान्मार्गे अनाहतं हृदयं, पुरोमार्गे आत्मस्वरूपभूतं हृदयं च किल प्रतिपादितवान् । सुषुम्नायाः पश्चात्पुरश्च द्वौ मार्गौ सिद्धौ शक्तिविहारायेत्य-गासीदुमासहस्रेऽप्याचार्यः—

"अंशेनाविश्यादौ यासि पुनस्त्वं ततश्च निर्यासि ।
मार्गाभ्यां द्वाभ्यां त्वं नाड्याः पश्चात्पुरश्च सिद्धाभ्याम् ॥" इति ॥

अथ मास्तु अनाहतं हृदयं, किं तु सर्वप्राणिनां वक्षःपीठे वामपार्श्वगस्य रक्त-पिण्डस्य हृदयपदवाच्यत्वं प्रसिद्धं, ततस्तदेव हृदयं स्यादिति चेन्नेत्याह—

**अन्यदेव ततो रक्त पिण्डाद्धृदयमुच्यते ॥**
**अयं हृदिति वृत्त्या तद् आत्मनो रूपमीरितम् ॥५॥**

ततः अथ रक्तपिण्डादन्यदेव हृदयमुच्यते । स्पष्टम् । तत्र रक्तपिण्डादन्य हृदयमित्युपपादनाय हृदयपदं निर्वक्ति । अयं हृदिति वृत्त्या पदार्थनिष्पत्त्या तत् हृ आत्मनो रूपं आत्मस्वरूपमीरितं कथितम् । हृदि स्थाने अयमात्मा पुरुषः हृदेवायमा इति च द्विधाऽप्युपपद्यते । स्वरूपान्वेषणे हृदि अयमात्मेत्युपपन्नम् । स्वरूपसि हृदेवायमित्युपपन्नतरम् । अतः सद्दर्शने— "हृद्येष चिन्तारहितो हृदाख्यः" इति प्र पादितम् । पाञ्चभौतिकस्येन्द्रियार्थस्य रक्तपिण्डस्य कथं आत्मस्वरूपवाचकहृदयशब्दवाच्य उपपद्येत? रक्तपिण्डमिव हृदयं कदाऽपि न गोचरं भवितुमर्हति । तस्माद्वैलक्षण्यमा दयितुं अयं हृदिति निरुक्तम् ।

अनिन्द्रियगोचरं रक्तपिण्डादन्यदेवास्त्वात्मस्थानं हृदयम् । क्व पुनस्तत्? इयत्त परिच्छेदरहितस्य स्वरूपस्य कथं स्थानमुच्येत? स्थानोक्तौ परिच्छेदाभ्युपगमात् आत्मस्वरू स्याखण्डत्वानवच्छिन्नत्वादि हीयेतेति चेन्न, तमोमूर्तेर्देशकालपरिच्छिन्नस्य जाड्यलक्षण शरीरस्य अहमभिमानदीपितस्य ज्ञानक्रियाव्यापारवत्त्वं अहं जानामि, अहं करो इत्यादि अहंवृत्तिमूलत्वेनैव सिद्धत्वात् अहंवृत्तिस्थानं शारीरकसर्वज्ञानक्रियावृत्तिमूलं शार क्वापि स्यादेवेति युक्तम् । स्यान्नामाहंवृत्त्युदयस्थानं शरीरे तत्कथमात्मस्वरूपावस्थ भवतीति चेदुच्यते । यद्यप्यहंवृत्तेरनतिरिक्तैवाहङ्कृतिः, सर्वासां वृत्तीनामहङ्कृतिमूलत् नाहंवृत्तौ पर्यवसायित्वं सिद्ध्येत् तथाऽपि अहंवृत्तेर्मूलान्वेषणात्मकसाधनं अहंस्फूर्तिरू ब्रह्मात्मभावसिद्धौ पर्यवस्यतीति स्थाननिर्देशे न कश्चिद्दोषः । अहंवृत्त्यपेक्षया देशका परिच्छिन्नं स्थानं हृदयाख्यं शारीरस्य निर्दिष्टम् । देशकालाद्यनवच्छिन्नं स्वरूपं अहंवृ मूलाश्रयत्वेन तत्रैवातले निराश्रये स्वतः सिद्धत्वात् अहंस्फूर्तिस्वरूपज्ञानस्यापि तदेव स्था मिति सिद्धम् । एवं चोपपद्यन्ते हृदयस्थाज्ञानहन्तृ हृदयस्थज्ञानमेवेति प्रतिपादया प्रमाणवचनानि—

"तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योग मातिष्ठोत्तिष्ठ भारत ॥"
"भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्वसंशयाः"

इत्यादीनि वृत्तिविक्षेपद्वारा सर्वभूतभ्रामिका माया हृदयस्थपुरुषादेवेति गीतासु पठ्यते-
"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।

तमेव शरणं गच्छ सर्वभावेन भारत ॥" इति ॥

एवमन्तःकरणोपहितचैतन्यस्य अनुपहितचैतन्यस्य च अन्वेषकान्वेष्ययोश्चैतन्य-मात्रसाम्यादेकत्रैवावस्थानं तच्च हृदयमिति सुतरामुपपन्नमित्यलम् ॥

एवमनाहताद्रक्तपिण्डाच्चान्यदेव हृदयं प्रतिपाद्य स्वानुभवदृष्टमात्मवित्सम्मतं तस्य स्थानं निर्दिशति ॥

तस्य दक्षिणतो धाम हृत्पीठे नैव वामतः ॥
तस्मात्प्रवहति ज्योतिः सहस्रारं सुषुम्नया ॥६॥

तस्य हृदयस्य हृत्पीठे हृदयपीठे वक्षःफलके दक्षिणतो धाम दक्षिणभागे स्थानं भवति । नैव वामतः वामभागे पूर्वोक्ते रक्तपिण्डे नैव भवति । निर्णयार्थक एवकारः । तस्मात् हृत्पीठदक्षिणभागस्थितात् हृदयात् सुषुम्नया योगशास्त्रप्रसिद्धया नाड्या सहस्रारं मूर्धनि स्थितं चक्रं (कर्म) ज्योतिः (कर्तृ) प्रवहति । हृदयात्प्रस्थितं ज्ञानात्मकं ज्योतिः सुषुम्नया द्वारा शिरसि सहस्रारं प्राप्य व्याप्रियते ॥

सर्वं देहं सहस्रारात् तदा लोकानुभूतयः ॥
ताः प्रपश्यन्विभेदेन संसारी मनुजो भवेत् ॥७॥

तत् ज्योतिः सहस्रारात् सर्वं देहं प्रवहतीति पूर्वश्लोकेनान्वयः । तदा हृदयात् सुषुम्नया सहस्रारं प्राप्य तस्मात्सर्वं देहं व्याप्य ज्ञानात्मके ज्योतिषि प्रवहति सति लोकानुभूतयः प्रापञ्चिकानुभूतयो जायन्त इति शेषः । ताः लोकानुभूतीर्विभेदेन पृथग्भावेन भेदबुद्ध्येत्यर्थः, प्रपश्यन् विलोकमानो मनुजः संसारी भवेत् । भेदबहुलानिन्द्रियार्थान् तदायत्तानलौकिकाननुभवान् पश्यन् पुरुषः संसृतिभ्रान्तो भवति । ज्ञानज्योतिषो मूलस्थानमविज्ञाय सहस्रारं प्राप्तस्य पुंसस्तस्य देहात्मभावसाधकस्य भेददृष्टिसम्पादकस्य वशङ्गतत्वादिति भावः । प्रकाशकं दीपमपश्यन् पुरुषः प्रकाशितानर्थान् गृह्णन्निव ज्ञानज्योतिर्मूलस्थानमपश्यन् तद्दीपितसहस्रारद्वारा प्रकाशिताँल्लोकानुभवान् गृह्णातीत्यर्थः ॥

तर्हि हृदयस्थस्य कीदृशं सहस्रारं दृश्यत इत्याह—

आत्मस्थस्य सहस्रारं शुद्धं ज्योतिर्मयं भवेत् ॥
तत्र जीवेन्न सङ्कल्पो यदि सान्निध्यतः पतेत् ॥८॥

आत्मस्थस्य हृदयस्थस्य ज्ञानिनः सहस्रारं मूर्धनि मनःस्थानं शुद्धं वृत्तिभिरबाधितं ज्योतिर्मयं ज्ञानमयमेव भवेत् । तत्र सहस्रारे सङ्कल्पो वृत्तिरूपः सान्निध्यतः सान्निध्यं च सामीप्यं तस्मात्तसिल् सार्वविभक्तिकः अत्र सप्तम्यर्थे, सहस्रारस्य निकटे इत्यर्थः । पतेद्यदि यतः कुतोऽप्यागच्छन् सङ्कल्पो ज्योतिर्मयसहस्रारसमीपपाती चेत् न जीवेत् नश्येदेवेत्यर्थः । ज्ञानिनः सहस्रारस्य शुद्धज्योतिर्मयत्वात् निस्सङ्कल्पत्वं तस्य कथितम् । अर्थात् अज्ञानिनः सहस्रारं वृत्तिमलिनमेव भवति, न तु शुद्धं ज्योतिर्मयमिति कथितं भवति ॥

मनसो विषयग्रहणेऽपि योगभङ्गो न स्यादात्मस्थस्येत्याह—

विज्ञायमानविषयं सन्निकर्षेण यद्यपि ॥
न भवेद्योगभङ्गाय भेदस्याग्रहणे मनः ॥९॥

यद्यपि मनःसन्निकर्षेण इन्द्रियार्थसन्निकर्षेण इन्द्रियात्मकतयाऽवस्थितस्य मनसः पुरः तत्तदिन्द्रियार्थेषु उपस्थितेषु सत्स्विति यावत्, विज्ञायमानविषयं विज्ञायमानाः विषयाः येन तत् भवतीत्यध्याहार्यं, तथाऽपि भेदस्य अग्रहणे सति भेददृष्टावसत्यामित्यर्थः, मनः योगभङ्गाय न भवेत् । योगो न विहन्येतेत्यर्थः । विषयभेदाः सान्निध्यवशान्मनसा गृह्यमाणा अपि अभेदरूपे स्वात्मनि स्थितस्य नित्ययुक्तस्य पुरुषस्य योगो न बाध्यते भेददृष्ट्यभावादिति भावः ॥

अथ विषयग्रहणाग्रहणाभ्यां हृदयस्थस्य पुरुषस्य निष्ठा न बाध्यत इत्याह—

गृह्णतोऽपि स्थिरैका धीः सहजा स्थितिरुच्यते ॥
निर्विकल्पः समाधिस्तु विषयासन्निधौ भवेत् ॥१०॥

गृह्णतोऽपि विषयसन्निकर्षेणार्थानिति शेषः, पुरुषस्य आत्मनिष्ठस्य एका स्थिरा धीः आत्मैकरूपा चलनरहिता बुद्धिर्ज्ञानज्वालेति यावत्, सहजा स्थितिरुच्यते, अयत्नतः स्वतःसिद्धा सहजा स्थितिरुक्ता। "पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन्। प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन् अपि॥" हृदयस्थः पुरुषः सहज-स्थितिसम्पन्नो भवति। विषयासन्निधौ तु निर्विकल्पसमाधिर्भवेत्। विषयेऽसन्निकृष्टे ग्राह्यार्थस्याभावात् केवलाभेदस्वरूपे मनो लीनं भवेत्। आत्मविदो हृदयनिष्ठस्य विषय-ग्रहणे सहजः समाधिर्विषयाग्रहणे निर्विकल्पश्चेति प्रतिपादितम्॥

अथ सर्वं बाह्यमान्तरं वा हृदये प्रतिष्ठितं हृदयमूलमित्याह—

> अण्डं वपुषि निःशेषं निःशेषं हृदये वपुः ॥
> तस्मादण्डस्य सर्वस्य हृदयं रूपसङ्ग्रहः ॥११॥

वपुषि शरीरे अण्डं ब्रह्माण्डं निःशेषं शेषरहितं सकलमपि भवतीत्यध्याहार्यम्। तस्मात् सर्वस्याण्डस्य ब्रह्माण्डस्य रूपसङ्ग्रहः रूपाणां समासो हृदयमेव भवति। यावद्भि-स्तत्त्वैर्ब्रह्माण्डं परिकल्पितं तावद्भिस्तत्त्वैरेव पिण्डाण्डमिति अण्डपिण्डयोस्तत्त्वत ऐक्यमाहु-स्तत्त्वदर्शिनः। ब्रह्माण्डाकारतयाऽवस्थितस्य ग्रहणं पिण्डाण्डायत्तं बोध्यम्। यद्यपि आकृतिबृहत्त्वात् ब्रह्माण्डांशभूतं ब्रह्माण्डाधीनं च पिण्डाण्डं प्रतिभाति स्थूलदृशां, तथाऽपि पिण्डाण्डाध्यक्षभूतचैतन्यस्यैव ग्राह्यतया विषयत्वेनावस्थितं भवति ब्रह्माण्डम्। तस्मादसति पिण्डे कथं विषयत्वेनाण्डं ग्राह्यं भवेत्? अगृहीते च तस्मिन् कस्य वा प्रति-भायात्तस्य सत्ता? तस्मात् विश्वं अण्डाख्यं चैतन्याधिष्ठितपिण्डसापेक्षम्। तद्ग्रहणं च पिण्डाधीनं पिण्डे प्रतिष्ठितं चेति भावः। अथ निःशेषं वपुर्हृदये भवतीत्युक्तम्। हृदयं ह्यात्मस्थानं यत्र सर्वं प्रतिष्ठितम्। वपुषो भौतिकत्वात् आत्मन एवाकाशादिभूताना-मुत्पत्तिश्रुतेश्च हृदये पिण्डाण्डस्य प्रतिष्ठा पिण्डे चाण्डस्य प्रतिष्ठेत्युपपादनात् सर्वस्यापि विश्वस्य सूक्ष्मतया हृदये समासेनावस्थितत्वं तत्त्वदृष्ट्या प्रतिपादितम्। अथ योगदृष्ट्याऽपि नामरूपात्मकस्य विश्वस्य हृदयप्रतिष्ठत्वं हृदयमेव सत्यं रूपमिति चोपपन्नं भवति। हृदयात्प्रस्थितस्य सहस्रारं प्राप्तस्य ज्ञानज्योतिषो व्यापारो हि देहात्माभिमानमूलक-

लोकानुभूतयः सहस्रारादेहं प्रवहता ज्योतिषा हि देहात्मभावो ज्ञानक्रियावृत्त्यात्मकमनः-प्राणवान् सम्भवति, देहात्मभावादेव विश्वस्य प्रतिभानम् । तस्मात् विश्वग्रहणं देहात्म-भावाधीनं, देहात्मभावश्च सहस्रारगतज्योतिर्व्यापारः । सहस्रारज्योतिश्च हृदयात्प्रस्थितं हृदयमूलमेवेति विश्वस्य हृदयं रूपसङ्ग्रह इति प्रतिपादितम् ॥

अथ प्रकारान्तरेण सूक्ष्मधियां सुगमा स्यादियमुपपत्तिः । स्थूलाकृतेर्विषयप्रपञ्चस्य सूक्ष्मभावेन अन्तःकरणवृत्त्यात्मकत्वं अन्तःकरणवृत्तेः सूक्ष्मायाः कारणावस्थायां अहं-वृत्तिरूपत्वं अहंवृत्तेश्चोदयलयौ हृदयमेवेति अण्डस्य रूपसङ्ग्रहो हृदयमिति सिद्धम् । सद्दर्शनेऽपि तथा ह्युपदेशो भवति—

"सरूपबुद्धिर्जगतीश्वरे च सरूपधीरात्मनि यावदस्ति ।
अरूप आत्मा यदि कः प्रपश्येत्सा दृष्टिरेकाऽनवधिर्हि पूर्णा ॥"

"यत्पञ्चकोशात्मकमस्ति देहं तदन्तरा किं भुवनं चकास्ति ?"

"मनोमयं तद्भुवनं वदामः",

"धिया सहोदेति धियाऽस्तमेति लोकस्ततो धीप्रविभास्य एषः"

इत्याद्यत्रानुसन्धेयम् ॥

अथ हृदये सर्वसमाप्तिमुपपादयति—

**भुवनं मनसो नान्य दन्यन्न हृदयान्मनः ॥**
**अशेषा हृदये तस्मात् कथा परिसमाप्यते ॥१२॥**

भुवनं विश्वं मनसोऽन्तःकरणप्रवृत्तिरूपात् नान्यत् भिन्नं न भवति । कुतः? मनोवृत्तेः सूक्ष्मायाः भुवनाकारस्थूलविषयात्मकत्वात् । तथा चोक्तम्—

"शब्दादिरूपं भुवनं समस्तं शब्दादिसत्तेन्द्रियवृत्तिभास्या ।
सत्तेन्द्रियाणां मनसो वशे स्या न्मनोमयं तद्भुवनं वदामः ॥"

हृदयान्मनो नान्यद्भवति, हृदयादेव मानसोत्पत्तेः । तस्माद्धेतोः हृदये आत्मस्वरूपस्थाने अशेषा कथा परिसमाप्यते, सर्वासां वाचामुपसंहार इत्यर्थः ॥

अथ मनसो हृदयाधीनत्वं दृष्टान्तेनोदाहरति—

**कीर्त्यते हृदयं पिण्डे यथाऽण्डे भानुमण्डलम् ॥**
**मनः सहस्रारगतं बिम्बं चान्द्रमसं यथा ॥१३॥**

यथा येन प्रकारेण अण्डे ब्रह्माण्डे भानुमण्डलं सूर्यमण्डलं भासते, तथा पिण्डे पिण्डाण्डे हृदयं कीर्त्यते । यथा ब्रह्माण्डे चान्द्रमसं बिम्बं चन्द्रमण्डलं चकास्ति, तथा सहस्रारगतं मनो विलसतीति शेषः । यथा सूर्यमण्डलान्निर्गताः रश्मयः चन्द्रे सङ्क्रान्ताः चन्द्रिकात्मकतया प्रकाशन्ते, तथा हृदयादुद्गम्य सहस्रारं प्राप्तस्य ज्योतिषो रश्मयो मनोवृत्त्यात्मकतया प्रकाशन्ते । यथा च चन्द्रप्रकाशस्य सूर्यप्रकाश एव मूलं, तथा मनोवृत्त्यात्मकबोधस्य हृदयबोध एव मूलस्वरूपमिति भावः । चन्द्रस्य स्वतोऽप्रकाशस्य स्वयंप्रकाशसूर्याधीनत्वमिव स्वतोऽबोधस्य मनोवृत्त्यात्मकबोधस्य हृदयबोधाधीनत्वं प्रतिपादितम् ॥

उक्तमेवार्थं विस्पष्टयति—

**यथा ददाति तपन स्तेजः कैरवबन्धवे ॥**
**इदं वितरति ज्योति र्हृदयं मनसे तथा ॥१४॥**

यथा तपनः सूर्यः कैरवबन्धवे चन्द्राय तेजो ददाति, तथा इदं हृदयं मनसे ज्योतिर्वितरति ददाति । स्पष्टम् अन्यद्व्याख्यातम् ॥

अथ ज्ञानिनो मनोवृत्तिं द्वाभ्यां व्याहरति—

**हृद्यसन्निहितो मर्त्यो मनः केवलमीक्षते ॥**
**असन्निकर्षे सूर्यस्य रात्रौ चन्द्रे यथा महः ॥१५॥**

रात्रौ निशि सूर्यस्यासन्निकर्षे असान्निध्ये अदर्शनं गते सूर्ये इत्यर्थः, चन्द्रे महः ज्योतिर्मर्त्यो यथा पश्यति, तथा हृदि हृदये असन्निहितोऽस्थितो मनुजः केवलं मनो

मनोमात्रं ईक्षते, न तु मनोमूलं हृदयमित्यर्थः । यथा रात्रौ अदृष्टे सूर्ये केवलं चन्द्रमह एव दृश्यते, एवं च यथा अदृष्टेऽपि रात्रौ सूर्ये दृश्यमानं चन्द्रमहः सूर्येणैव दीयते, तथाऽविद्यादशायामविदितेऽपि हृदये भासमानं मानसं ज्ञानं हृदयेनैवार्प्यत इति गम्यते ॥

अविदितस्वरूपः पामरो पृथग्भावान् पश्यतीत्याह—

अपश्यँस्तेजसो मूलं स्वरूपं सत्यमात्मनः ॥
मनसा च पृथक्पश्यन् भावान् भ्राम्यति पामरः ॥१६॥

आत्मनः सत्यं स्वरूपं अपश्यन् अजानन् पामरो मनसा करणेन पृथग्भावानर्थान् पश्यन् गृह्णन् भ्राम्यति भेदभावेषु भ्रान्तो भवति । एवमज्ञस्य गतिमुक्त्वा विज्ञस्य स्थितिमाह—

हृदि सन्निहितो ज्ञानी लीनं हृदयतेजसि ॥
ईक्षते मानसं तेजो दिवा भानाविवैन्दवम् ॥१७॥

हृदि हृदयकुहरमध्ये सन्निहितः स्थितः आत्मस्वरूपनिष्ठो ज्ञानी वस्तुयाथार्थ्यज्ञानवान् पुरुषो हृदयतेजसि हृदयज्योतिषि चित्स्वरूपे लीनं स्वात्मप्रकाशमग्नं मानसं मनः ईक्षते पश्यति । कथम्? दिवा भानौ सूर्ये सन्निहिते ऐन्दवं चान्द्रं तेज इव सूर्यसन्निधौ चन्द्रदर्शनमिव हृदयस्थस्य सहस्रारगतमनोदर्शनमिति भावः ॥

अथ ज्ञानस्य मानसात्मकत्वव्यवहारे लोकसिद्धे तस्य द्वैरूप्यं निरूप्य हृदयमनसोः सम्बन्धं अर्थतः प्रतिपादयति—

प्रज्ञानस्य प्रवेत्तारो वाच्यमर्थं मनो विदुः ॥
अर्थं तु लक्ष्यं हृदयं हृदयान्नापरः परः ॥१८॥

प्रवेत्तारः आत्मविदः प्रज्ञानस्य सर्वात्मभूतस्य ब्रह्मणश्चित्स्वरूपस्य मनः [illegible]वृत्त्यात्मकं ज्ञानं वाच्यमर्थं मुख्यार्थं विदुः जानन्ति । हृदयं तु निरहङ्कारवृत्तिस्वरूपं

मनोवृत्त्यधिष्ठानं केवलं चित्स्वरूपं आत्मानं लक्ष्यमर्थं लक्ष्यार्थं विदुरिति शेषः । परः ईश्वरः परम आत्मा हृदयान्नापरः हृदयान्नान्यः हृदयमेव स इति भावः ॥

अथ कथमिदमुच्यते यत् प्रज्ञानस्य वाच्यार्थभूतं मन इति? ब्रूमः । पदस्य यस्मिन्नर्थे शक्तिर्वर्तते स एव मुख्यार्थवाच्यार्थापरपर्यायः शक्योऽभिधीयते । प्रज्ञान-पदवाच्यचैतन्यस्य कथं मनसि शक्यता भवेत्? भवत्येव साहङ्कारवृत्तेर्मनोमयस्य पुरुषस्य मनसैव ज्ञत्वसिद्धेः । अमनसो जडत्वं लोकसिद्धं, तथा समनसो ज्ञत्वं च, तत्त्वमसि-महावाक्येऽपि मनोमयं साहङ्कारं पुरुषमधिकृत्यैवोपदिश्यते । मनसोऽहङ्कृतिविलसित-त्वादहङ्कार एव मनःशब्देनोक्तः । तस्मात् प्रज्ञानस्याहङ्कार एव मुख्यार्थो भवति ।

अथ च यत्र मुख्यार्थबाधेन असङ्गतो भवति वाच्यार्थस्तत्र वाच्यार्थेन साक्षात्स-म्बन्धवान् लक्ष्याख्योऽर्थो ग्राह्यः । इह चिदात्मस्वरूपस्य स्वतःसिद्धस्य प्रज्ञानस्य मनो-रूपो वाच्यार्थो बाध्यते, साहङ्कारस्य मनोवृत्तेरचिद्रूपदेहात्माभिमानवत्त्वात् स्वतःसिद्ध्य-भावतया अन्याश्रितत्वाच्च । तस्माद्वाच्यैकदेशस्य मानसोपहितचैतन्यस्य लक्ष्यार्थतया ग्राह्यत्वं सिद्धम् । एवं प्रज्ञानस्य लक्ष्यार्थो हृदयमुच्यते । वाच्यैकदेशस्य मनआख्या-न्तःकरणोपहितचैतन्यस्य लक्ष्यार्थे हृदये तादात्म्यसम्बन्धो ग्राह्यः, सर्वस्यापि पदार्थस्य स्वरूपे तादात्म्यसम्बन्धात् । तस्माद्वाच्यैकदेशचित्स्वरूपमेव लक्ष्यार्थभूतहृदयाख्यं चि-त्स्वरूपमिति भावः । एवं चितो वाच्यार्थं मनो, लक्ष्यार्थं हृदयं च प्रतिपाद्य, तस्मात् हृदयान्नान्यः पर आत्मा, ब्रह्मण एव हृदयकुहरमध्ये आत्मरूपेण स्फुरणादिति निर्णयो-पदिष्टम् ॥

अथ दृग्दृश्यभेदाभेदधियमधिकृत्याह—

**दृग्दृश्यभेदधीरेषा मनसि प्रतितिष्ठति ॥**
**हृदये वर्तमानानां दृग्दृश्यैनैकतां व्रजेत् ॥१९॥**

एषा अस्मदादीनां व्यवहारसिद्धा दृग्दृश्यभेदधीः दृक् दृश्यं च दृग्दृश्ये विषयि-विषयपदवाच्ये तयोर्भेदो विभागः पृथग्भाव इत्यर्थः, तस्मिन् धीः ग्रहणात्मिका बुद्धिः

द्रष्टृ-दृश्ययोः पृथग्भावग्राहिणी वृत्तिरित्यर्थः । सा मनसि सहस्रारगते वृत्तिरूपे प्रतितिष्ठति प्रतिष्ठिता भवति । मनस्येषा भेददृष्टिर्न हृदय इत्युत्तरार्धेनाह । हृदये स्वरूपे वर्तमानानां तिष्ठतां आत्मविदामिति यावत् । दृक् द्रष्टा विषयी दृश्येन विषयेण एकतां एकभावं व्रजेत् गच्छेत् । आत्मविदां हृदयनिष्ठानां मूलस्वरूपादभिन्नत्वेन द्रष्टृत्वसिद्धेर्दृश्यस्यापि स्वरूपादभिन्नत्वं सिद्ध्यति । अत एव द्रष्टृ-दृश्ययोः स्वरूपे तादात्म्यसम्बन्धादभेदः प्रत्यपादि । उत्तरत्र चेदं प्रपञ्चयिष्यते ॥

अथ द्वाभ्यां श्लोकाभ्यामज्ञानदशायां निमित्तविशेषैर्मनोवृत्तिर्हृदयं प्राप्नोतीत्याह—

**मूर्च्छानिद्रातिसन्तोष- शोकावेशभयादिभिः ॥**
**निमित्तैराहता वृत्तिः स्वस्थानं हृदयं व्रजेत् ॥२०॥**

मूर्च्छा मोहः, निद्रा निःस्वप्ना सुप्तिः, अतिसन्तोषः हर्षातिशयः, शोको विषादः, आवेशो भूतानामाक्रमः, भयं भीतिः इत्यादिभिर्निमित्तैराहता हठान्निहता वृत्तिः मानसी स्वस्थानं स्वमूलभूतं हृदयं स्वरूपं व्रजेत् गच्छेत् ॥

**तदा न ज्ञायते प्राप्ति- र्हृदयस्य शरीरिणा ॥**
**विज्ञायते समाधौ तु नामभेदो निमित्ततः ॥२१॥**

तदा मूर्च्छादिसमये शरीरिणा देहिना पुरुषेण हृदयस्य प्राप्तिः स्वरूपलाभः न ज्ञायते नावगम्यते । समाधौ तु ज्ञानपूर्वकं हृदये वृत्तीनामुपसंहारान्निष्पन्ने स्वरूपावस्थितिरूपे हृदयस्य प्राप्तिर्विज्ञायते । निद्रादिषु न ज्ञायते हृदयप्राप्तिः समाधौ तु ज्ञायत इति निमित्ततो हेतुविशेषेण नामभेदो निद्रेत्यादिनामभेदः ॥

॥ इति पञ्चमोऽध्यायः ॥

# ॥ षष्ठोऽध्यायः ॥

पञ्चमेऽध्याये हृदयविद्यां निरूप्येह षष्ठे मनोनिग्रहोपायमुपन्यस्यति भगवान् महर्षिः । अतीतोऽध्याय इवायमपि स्वतःप्रवृत्तोपन्यासः, न तु प्रश्नप्रतिवचनात्मको भवति ॥

तत्र प्रथममध्यायविषयमाह—

निरूप्य हृदयस्यैवं तत्त्वं तत्त्वविदां वरः ॥
मनसो निग्रहोपाय मवदद्रमणो मुनिः ॥१॥

तत्त्वविदां वरः तत्त्वज्ञानां श्रेष्ठो रमणो मुनिः भगवान्महर्षिः एवं उक्तप्रकारेण हृदयस्य तत्त्वं याथार्थ्यं निरूप्य प्रदर्श्य मनसश्चलनस्वभावस्य निग्रहोपायं निग्रहस्य नियमनस्योपायं साधनमवदत् उक्तवानित्यर्थः । मनोनिग्रहे साधिते सिद्धस्वरूपं हृदयं स्वतःप्रकाशत इति साधनमुपदिशति ॥

नित्यवृत्तिमतां नृणां विषयासक्तचेतसाम् ॥
वासनानां बलीयस्त्वा न्मनो दुर्निग्रहं भवेत् ॥२॥

विषयासक्तचेतसां विषयेषु इन्द्रियार्थेषु भोग्येषु आसक्तं सङ्गयुक्तं चेतो मनो येषां तेषां अत एव नित्यवृत्तिमतां नित्यं सन्ततं वृत्तयः कर्मेन्द्रियज्ञानेन्द्रियव्यापाराः तत्स्मरणप्रतिसन्धानात्मकवृत्तयो वा येषां सन्ति तेषां नृणां संसारिणामित्यर्थः वासनानां सञ्चितानां पूर्वानुभवजन्यानां स्मृतिहेतुभूतसंस्कारविशेषाणां बलीयस्त्वात् हेतोः मनो दुर्निग्रहं दुःखेन निग्रहीतुं शक्यं भवेत् मनोनियमनं कृच्छ्रसाध्यं स्यादित्यर्थः । मनसो दुर्निग्रहत्वं प्रति वासनाबलीयस्त्वस्य हेतुत्वप्रतिपादनात् वासनादौर्बल्यसम्पादने मनः सुनिग्रहं भवतीति तदुपायमुपदिशति । वासनाक्षयस्तु ज्ञानोदयादेव नान्यथेति बोध्यम् । ''असंयतात्मना योगो दुष्प्राप'' इति हि स्मर्यते । अतो निग्रहाख्यं संयमनमुपन्यस्यते ॥

चपलं तन्निगृह्णीया त्प्राणरोधेन मानवः ॥
पाशबद्धो यथा जन्तु स्तथा चेतो न चेष्टते ॥३॥

मानवः चपलं चञ्चलं तन्मनः प्राणरोधेन प्राणवायुसंयमनेन निगृह्णीयाद्बध्नीयात् वशयेदिति यावत् । तथा क्रियमाणे पाशबद्धो जन्तुः रज्ज्वा बन्धं प्राप्तस्तिर्यग्विशेषो यथा न चेष्टते तथा चेतो मनः प्राणरुद्धो न चेष्टते । अचञ्चलं भवतीत्यर्थः ॥

अथ कथमिदं प्राणेन मनोनिग्रहमुपदिशति सहजात्मनिष्ठागुरुर्भगवान् महर्षिः? मनसो नेतृत्वं प्राणस्य नीयमानत्वं हि मनोमयः प्राणशरीरनेतेत्यादिश्रुतिवाक्यानि प्रतिपादयन्ति । अपक्वस्य देहात्माभिमानिनः पुरुषस्य मनो देहे प्राणनिघ्नं भवति । क्षुत्पिपासाबहुलस्य बुभुक्षोः प्राणस्य स्वभावतो भोगाय विषयेषु प्रवृत्तौ सत्यां, शारीरं प्राकृतं मनस्तद्वशङ्गतं तेन नीयमानं जडवच्चेष्टते । प्राणस्य रोधेन तस्यावश्यकः संस्कारः सम्पादितो भवति । संस्कृतेन प्राणेन तद्वशगं मनोऽपि परिपक्वं भवति । एवं प्राणरोधेन मनोनिग्रहः साध्यत्वेनोपपादितः । अथ प्राणरोधेन वृत्तिनिरोधस्य प्रयोजनमाह—

प्राणरोधेन वृत्तीनां निरोधः साधितो भवेत् ॥
वृत्तिरोधेन वृत्तीनां जन्मस्थाने स्थितो भवेत् ॥४॥

प्राणरोधेन प्राणनियमनेन करणेन वृत्तीनां निरोधः मनोवृत्तीनां समाधानात्मकः संयमो नैश्चल्यसम्पादको निग्रह इति यावत्, साधितो भवेत् । तेन वृत्तिरोधेन वृत्तीनां मनोविकाराणां जन्मस्थाने उदयस्थाने स्थितो भवेत् साधक इति शेषः ॥

अत्रेदं द्रष्टव्यम् । अधिकारिणः परिपाकानुसारेण साधनोपक्रममार्गः प्रदर्श्यते भगवता महर्षिणा । येषां सुकृतसंस्कारसम्पन्नं दृढं भवेन्मनस्तैर्बलीयसा मनसा स्वस्वरूपेऽन्विष्यमाणे, प्राणस्तन्मनोऽनुगम्य तेन सह निरुद्धं अत एव निश्चेष्टं भवेत् । येषां मनोऽपक्वं दुर्बलं भवेत्, तेषां मनो बहिर्मुखतया प्राणेन नीयमानं विषयानन्वेषते । दुर्बलो बलवता जीयत एवेति सिद्धमेतत् । अतो बलिष्ठे मनसि स्वरूपं चिन्वति, तस्मिन्मज्जति वा तद्बहिर्मुखीकर्तुं पवनो निर्वीर्यः सन् निश्चेष्टस्तेन सह लीयते, प्राणमनसोरुभयोरप्येक-

मूलत्वात् । अत्रेयं भगवती रमणवाग्भवति—

"चित्तवायवश्चित्क्रियायुताः । शाखयोर्द्वयी शक्तिमूलका ॥" इति ॥

अथ यद्यपि केषाञ्चित्प्राणरोधेनैव मनोनिग्रहः साधनीयो भवति, तथाऽपि प्राण-रोधस्य हठयोगसाधनानि नानिवार्याणीति तस्य सूक्ष्मं मार्गं प्रदर्शयति ॥

**प्राणरोधश्च मनसा प्राणस्य प्रत्यवेक्षणम् ॥**
**कुम्भकं सिद्ध्यति ह्येवं सततप्रत्यवेक्षणात् ॥५॥**

प्राणरोधश्च प्राणनियमनस्वरूपं किमिति चेत्, 'मनसा प्राणस्य प्रत्यवेक्षणं' मनसा करणेन प्राणस्य कर्मणि षष्ठी प्रत्यवेक्षणं जागरूकतया प्राणस्य गत्यागती अनुसृत्य अवलोकनं अनुसन्धानमिति यावत् । एवमनेन प्रकारेण सततप्रत्यवेक्षणादविच्छेदेन प्राणवायुचल-नान्ववेक्षणेन कुम्भकं यातायातविरामरूपं प्राणनिरोधनं सिद्ध्यति सिद्धं भवति । हि योगवित्सु प्रसिद्धिं द्योतयति ॥

उच्छ्वासनिःश्वासगत्यनुसारिणी मनोवृत्तिरेकाग्रतायां पर्यवस्यति । एकाग्रतायां सिद्धायां प्राणेन सह मनः स्वजन्मस्थानं गच्छतीत्येतां मनसा प्राणरोधपद्धतिं अजपां गायत्रीमाहुः, प्रयत्नकृतजपस्याविद्यमानत्वात् । इदमेव साधनं सोऽहंविचारनिष्ठैर्हंसो-पासनमुच्यते ॥

अथ यद्यपि पवनगतेरयत्नसिद्धत्वादयं कुम्भकसम्पादको निग्रहोपायः सहजो भवति, तथाऽपि कृतिनां बलवतां केषाञ्चिदेवायं शक्यः । तस्मादन्येषामुपायान्तरेण कुम्भकमुपदिश्यते ॥

**येषां नैतेन विधिना शक्तिः कुम्भकसाधने ॥**
**हठयोगविधानेन तेषां कुम्भकमिष्यते ॥६॥**

येषां साधकानां एतेन पूर्वोक्तेन विधिना प्राणप्रत्यवेक्षणविधानेनेति यावत्, कुम्भकसाधने शक्तिर्न भवति, तेषां हठयोगविधानेन कुम्भकमिष्यते । स्पष्टम् । अत्रेद-

मुच्यते । यद्यप्युत्तमाधिकारिणं परिपक्वचेतसमपेक्ष्य जघन्यमिदं हठयोगविहितं कुम्भक-साधनं, तथाऽपि केषाञ्चिदधिकारिणां तदेवानिवार्यं वरिष्ठं साधनं भवतीति हठयोग-साध्यं कुम्भकं साधनत्वेनोपदिष्टम् । मानुषं जन्म प्राप्तवतः पुरुषस्य श्रेयस्कामस्य स्व-स्वरूपं हृदयं प्राप्तव्यम् । तत्र येन केनाप्युपायेन स्वस्वरूपावस्थितो भवेदिति पुरुषाणां परिपाकभेदादुपायभेदाँस्तत्र तत्र प्रदर्शयति भगवान्महर्षिः । तस्मादस्याधिकारिसापेक्ष-मुपदिशतः श्रीमहर्षेर्न कोऽप्यभ्युपायो निषिद्धो भवति । एकमेव निषिद्धम् । तच्च समुपस्थिते नित्यश्रेयस्यात्मस्वरूपे तद्वैमुख्यकारकं जडीकृतमनस्कं उपहतपुरुषकारमालस्य-मेवेत्यलं विस्तरेण ॥

अथ हठयोगिनो बहुधा श्वासादानविसर्जनकालप्रमाणानि ब्रुवन्ति । तत्रैकं कालप्रमाणमिह निर्धार्य प्राणायाम उपदिश्यते ॥

**एकदा रेचकं कुर्यात् कुर्यात्पूरकमेकदा ॥**
**कुम्भकं तु चतुर्वारं नाडीशुद्धिर्भवेत्ततः ॥७॥**

रेचकं निःश्वासं एकदा एकवारं कुर्यात् । पूरकमुच्छ्वासमेकदा एकवारं कुर्यात् । कुम्भकं श्वासरोधं तु चतुर्वारं कुर्यात् । ततः एवं रेचकपूरककुम्भकाभ्यासान्नाडीशुद्धि-र्भवेत् । अथ नाडीनामशुद्धेरेव प्राणस्यानियमितत्वात् तच्छोधनेन प्राणो वशितो भवतीत्याह—

**प्राणो नाडीषु शुद्धासु निरुद्धः क्रमशो भवेत् ॥**
**प्राणस्य सर्वथा रोधः शुद्धं कुम्भकमुच्यते ॥८॥**

नाडीषु सूक्ष्मासु धमनीषु शुद्धासु शुद्धिं गतासु प्राणायामेन विधिनेत्यर्थः । 'प्राणः क्रमशो रुद्धो भवेत्' प्राणः क्रमेण अभ्यासबलाद्वशितो नियमितः स्यादिति यावत्, सर्वथा सर्वप्रकारेण प्राणस्य रोधो निग्रहः शुद्धं कुम्भकमुच्यते । सम्पूर्णप्राणरोध एव पूर्णं कुम्भकं भवति ॥

अथ ज्ञानिनामेकेषामभिमतं रेचकादिस्वरूपमाह—

त्यागं देहात्मभावस्य रेचकं ज्ञानिनः परे ॥
पूरकं मार्गणं स्वस्य कुम्भकं सहजस्थितिम् ॥९॥

परे ज्ञानिनो देहात्मभावस्य देहे आत्मनो भावो देहात्मबुद्धिरित्यर्थः, तस्य त्यागं ज्ञानं रेचकं प्राहुरिति शेषः। नाहं देह इति, शरीरे वासनाबलाद्रूढां अहंप्रतीतिं निस्सार्य त्यजेत्। एवं देहात्मधीपरित्याग एव रेचकं भवति। स्वस्य आत्मनः मार्गणं अन्वेषणं पूरकमाहुः। कोऽहं क्वास्मीति वा शरीरे स्वात्मगवेषणं पूरकं प्राहुः। सहजस्थितिं अयत्नतः स्वस्वरूपावस्थितिं कुम्भकं प्राहुः ॥

अथ मन्त्रजपेनापि मनोनिग्रहः शक्य इत्याह—

जपेन वाऽथ मन्त्राणां मनसो निग्रहो भवेत् ॥
मानसेन तदा मन्त्र प्राणयोरेकता भवेत् ॥१०॥

योगमार्गेण ज्ञानमार्गेण च मनोनिग्रहं प्रतिपाद्य मन्त्रजपस्यापि तत्साधनत्वमाह। 'अथ मन्त्राणां जपेन वा मनसो निग्रहो भवेत्।' स्पष्टम्। तदा मनोनिग्रहे जाते, मन्त्रप्राणयोः मन्त्रस्य प्राणस्य चोभयोर्निगृहीतेन मानसेन सह एकता ऐक्यं भवेत्। "मन्त्रः प्राणेनैवैकतां व्रजेत्" इति पाठे मन्त्रः प्राणेन यथा एकतां व्रजेत् तथा मानसेनापीति बोध्यम् ॥

अथ मन्त्रयोगस्वरूपं प्रतिपादयन् तस्य स्वात्मनिष्ठासाधनत्वमाह—

मन्त्राक्षराणां प्राणेन सायुज्यं ध्यानमुच्यते ॥
सहजस्थितये ध्यानं दृढभूमि प्रकल्पते ॥११॥

मन्त्राक्षराणां मन्त्रस्य सूक्ष्ममन्तरेवोच्चार्यमाणस्य मन्त्रविशेषस्य अक्षराणां वर्णानां प्राणेन सायुज्यं सयुक्त्वं सहयुक्तत्वं ऐक्यमिति यावत्। ध्यानमुच्यते। यद्यपि मनः एव जप्तृ भवति, तथाऽपि जप्यमानस्य मन्त्रस्य वर्णानामभिव्यक्तिः प्राणेनैव भवति।

सूक्ष्मजपक्रियायाः प्राणेनैव निर्वर्त्यमानत्वात् प्राण एव मन्त्राक्षरात्मकतां गच्छति, मन्त्राक्षराणि च प्राणरूपतां व्रजन्ति । अतो मन्त्राक्षरप्राणयोरवियोज्यत्वरूपं रूपैक्यं सायुज्यं सिद्ध्यति । मन्त्रयोगमार्गेणेदं ध्यानमुच्यते । तच्च ध्यानं मन्त्रप्राणयोरैक्यं "दृढभूमि" सत् दृढा भूमिः स्थितिर्यस्य तत् प्राप्तस्थितिपदमिति यावत् । सहजस्थितये प्रकल्पते । सहजात्मनिष्ठां सम्पादयितुं प्रभवतीति भावः ॥

अथान्यं मनोनिग्रहोपायं योगविद्रम्यं रहस्यमुद्घाटयन्नध्यायमुपसंहरति—

**सहवासेन महतां सतामारूढचेतसाम् ॥**
**क्रियमाणेन वा नित्यं स्थाने लीनं मनो भवेत् ॥१२॥**

क्रियमाणेन सतामारूढचेतसां महतां नित्यं सहवासेन वा स्थाने मनो लीनं भवेदिति योजना । अस्मिन्नध्याये मनोनिग्रहोपायभूतसाधनानामन्यतममप्यकुर्वाणस्य पुरुषस्यापि जिज्ञासोर्मनसः स्वरूपावस्थितिर्महतां सहवासेन सिद्ध्यतीति प्रतिपाद्यते । महापुरुषसहवासेन जिज्ञासोः पुरुषस्य साधनान्तरवर्जमेव परिपाकसिद्धेः क्रमशः कालेन मनः स्वस्थितिं प्राप्नुयात् । यथा धीरस्य सहवासाद्भीरोरपि भीरुत्वं बाध्यते, धैर्यं च लेशतो वा जायते, तथा पण्डितस्य साङ्गत्यात् पामरत्वं बाध्यमानं क्रमेण हीयत इति सुबोधम् । यथा वा जाज्वल्यमानात्प्रसरतो गाढाग्नेः परितः क्षिप्तानि आर्द्रेन्धनानि क्रमशः स्वयं ज्वलितानि भवन्ति, तथेमानि भूतानि आत्मविदं महापुरुषं परितः स्थितानि आत्मवित्प्रभानिमग्नानि मनोनिग्रहसम्पन्नानि भवन्ति ॥

अथ महतामित्यस्य विशेषणद्वयोपादानमवधेयम् । के वा महान्तः येषां सहवासः सहवासिनां ज्ञानप्रदं परिपाकं विधत्ते? तेजोवृद्धा हि महान्तः येषामन्तरस्था प्रभा तनुद्वारा दीपप्रभा काचावृतिद्वारेव निर्गम्य बहिः प्रसृता परितोऽन्येष्वाश्रितेषु सङ्क्रान्ता भवति । तस्मान्महतां सहवासे क्रियमाणे तत्प्रभाविशेषसङ्क्रान्तिः फलतीति हेतोर्महत्प्रोक्तं फलं महतां सहवासस्य, तदेतन्महतां महत्त्वं यदेषामन्यसङ्क्रान्तिसामर्थ्यं स्वभावतः सिद्धम् । 'आरूढचेतसां' मनोजयवतां वशिनां ज्ञानसिद्धानामिति यावत्, एकेषां महतां ज्ञानसिद्धिं विनाऽपि महान् प्रभावः स्यात् । अतो ज्ञानित्वविशिष्टं महत्त्वमभिप्रेतम् ।

'सतां' सर्वेऽपि ज्ञानिनः सत्पुरुषा एव भवन्ति । लोके दुर्जनं न केऽपि महान्तं मन्यन्ते । तत्कुत इदं विशेषणम्? सौजन्यद्योतनायेति ग्राह्यम् । उन्मत्तवत्पिशाचवदाचरति ज्ञानिनि महापुरुषे, कथं तत्सहवासो घटते जिज्ञासोरपि मानुषस्य?

तस्मादुन्मत्तपिशाचवदनाचरतां बालवत्स्थितानां महापुरुषाणां सहवासेनात्यन्तिकश्रेयोलाभो मनसः स्वरूपावस्थितिरूपः प्रत्यपादि । अत्र महापुरुषस्य प्रभासङ्क्रान्तिरन्यत्रास्माभिरुल्लिखिता। 'आभ्यन्तरजीवनप्रभां बाह्यजीवने स्वभावतोऽभितः प्रसारयतः' इति श्रीमहर्षिमधिकृत्याभ्यधायि । एवमेव स्तौति चाचार्योऽस्माकं "हृदयकमले नित्यानिष्ठा बहिश्च सरत्प्रभे" इति ॥

॥ इति षष्ठोऽध्यायः ॥

# ॥ सप्तमोऽध्यायः ॥

अस्मिन्नध्याये प्रष्टुः कार्ष्णेः प्रत्युत्तरदानेनात्मविचाराधिकारितदङ्गानि निरूप्यन्ते ॥

भारद्वाजस्य वै कार्ष्णे राचार्यरमणस्य च ॥
अध्याये कथ्यते श्रेष्ठः संवाद इह सप्तमे ॥१॥

भारद्वाजस्य भरद्वाजसगोत्रस्य कार्ष्णेः कृष्णनाम्नः पुत्रस्य आचार्यरमणस्य भगवन्महर्षेश्च श्रेष्ठः संवाद इह सप्तमेऽध्याये कथ्यते । स्पष्टम् ॥

कार्ष्णिरुवाच—

रूपमात्मविचारस्य किं नु किं वा प्रयोजनम् ॥
लभ्यादात्मविचारेण फलं भूयोऽन्यतोऽस्ति वा ॥२॥

आत्मविचारस्य आत्मनोऽहंभावाश्रयस्य स्वरूपमधिकृत्य क्रियमाणस्य विचारस्य मार्गणपरीक्षणात्मकस्य विमर्शस्य रूपं स्वरूपं किं नु इति प्रश्नः । किं वा प्रयोजनम् ।

आत्मविचारेण लभ्यात् प्राप्यात् फलात् भूयोऽपि फलं महत्तरं प्रयोजनं अन्यतोऽस्ति वा, आत्मविचारादन्यस्मात् कस्मादपि लभ्यं विद्यते वेत्यर्थः । किंस्वरूपः किंप्रयोजनो वाऽऽत्मविचारः आत्मविचाराद्यत्फलितं ततोऽप्यधिकं किमप्यस्ति न वा इति त्रयः प्रश्नाः । एषां क्रमेण प्रतिवचनमाह ॥

भगवानुवाच—

सर्वासामपि वृत्तीनां समष्टिर्या समीरिता ॥
अहंवृत्तेरमुष्यास्तु जन्मस्थानं विमृश्यताम् ॥३॥

या सर्वासां वृत्तीनां मनोवृत्तीनां समष्टिः संहतिः समीरिता कथिता अमुष्यास्तस्या अहंवृत्तेर्जन्मस्थानं विमृश्यतां विचार्यताम् । "अहंवृत्तिः समस्तानां वृत्तीनां मूलमुच्यते" इति हृदयविद्याध्याये या पठिताऽहंवृत्तिः सा कस्मादुदेतीति क्रियमाणः सूक्ष्मो विमर्श एव विचार इति आत्मविचारस्वरूपमुक्तम् ॥

तद्द्रढयति—

एष आत्मविचारः स्यान्न शास्त्रपरिशीलनम् ॥
अहङ्कारो विलीनः स्यान्मूलस्थानगवेषणे ॥४॥

एष आत्मविचारः स्यात् अहंवृत्त्युद्भवस्थानविमर्शः आत्मविचारः । न शास्त्रपरिशीलनं शास्त्रविचारो नात्मविचारो भवितुमर्हति । विचारफलविवक्षया विचारसिद्धिप्रकारमाहोत्तरार्धेन । मूलस्थानगवेषणे अहंवृत्तेर्मूलस्थानस्य मार्गणे क्रियमाणे अहङ्कारो विलीनः स्यात् अहङ्कारस्य स्वोदयस्थाने विलयो भवति । विलीने त्वहङ्कारे, न किमपि कर्तुं ज्ञातुं वाऽवशिष्यत इति स्याच्छङ्का पामरपुरुषस्य । विषयान्विज्ञातुं कर्माणि कर्तुं वा साहङ्कार एव प्रभवति । अहं करोम्यहं जानामीति कर्तुं ज्ञातुं वा कोऽस्तीहाहङ्कारविनष्टाविति अज्ञदृष्टिसम्भवायां विचिकित्सायामाह—

आत्माभासस्त्वहङ्कारः स यदा सम्प्रलीयते ॥
आत्मा सत्योऽभितः पूर्णः केवलः परिशिष्यते ॥५॥

आत्माभासस्तु आत्माभास एवाहङ्कारः, यदा सम्प्रलीयते लीनो भवति, तदा सत्य आत्माऽभितः परितः पूर्णः केवल एको निर्विशेषः सन् परिशिष्यते । तस्य स्वतः-सिद्धत्वान्नास्त्यागमोऽपायो वा ॥

अहङ्कारविलये यदवशिष्यमाणं भवति, तन्न शून्यं, किं तु पूर्णं वस्तु यदेवात्मा अहङ्कारस्यापि मूलाश्रयत्वेन तिष्ठति । अथ च लोकव्यवहारेऽपि आत्माश्रयत्वेनैव कर्मेन्द्रियाणां ज्ञानेन्द्रियाणामन्तःकरणस्यापि व्यापारः सम्भवति । निरहङ्कारं कर्म ज्ञानं वा नैव शक्यमिति तु भ्रम एवेति ज्ञेयम् । उदिते सूर्ये तत्प्रभावात्तत्प्रभावाश्रयणाच्च लोके सर्वाणि भूतानि स्वेषु कर्मसु प्रवर्तन्ते । एवं सहजसिद्धे चात्मस्वरूपे तदाश्रयणादेव चित्क्रियात्मकमनःप्राणव्यापाराः प्रचलन्ति, न त्वहङ्कारिणः, तस्य स्वतो रूपाभावात्, अस्वतन्त्रत्वाच्च ॥

तथा च सद्दर्शने प्रतिपादितम्—

"रूपोद्भवो रूपततिप्रतिष्ठो रूपाशनो धूतगृहीतरूपः ।
स्वयं विरूपः स्वविचारकाले धावत्यहङ्कारपिशाच एषः ॥" इति ॥

तस्मादहङ्कारो न वस्तुत आत्मा, किं तु आत्मेवाभासमानोऽहंवेषधरो यो विचारे क्रियमाणे विरूपो धावत्येवेति तस्य विलयनमुक्तम् । यद्यपि, आत्माभासस्याहङ्कारस्य विलय इष्यते । तथाऽपि "वाच्यमर्थं मनो विदुः" इति प्रागुक्तलक्षणं अहंपदं प्रति तस्यैवाभिधेयत्वात् तेनैव स्वलयो निर्वाह्यः । तस्मात्तन्मूलान्वेषणेन तल्लयविधाने साधिते अहंपदलक्ष्यार्थं हृदयं आत्मस्वरूपं विदितं भवतीति विचारसिद्धिप्रकारः प्रतिपादितः । आत्मलाभः फलमिति च सूचितम् ॥

अथ फलं विवृण्वन्नुत्तमं तदित्याह—

**सर्वक्लेशनिवृत्तिः स्या त्फलमात्मविचारतः ॥**
**फलानामवधिः सोऽय मस्ति नेतोऽधिकं फलम् ॥६॥**

उक्तस्वरूपादात्मविचारतः सर्वक्लेशनिवृत्तिः सर्वेषां क्लेशानां दुःखानां अविद्यास्मितादीनां वा निवृत्तिः फलं स्यात् । सर्वानर्थनिबर्हण आत्मविचार इति प्रयोजनमुक्तं भवति । सोऽयं तादृशः फलवानात्मविचारः फलानामवधिः परा कोटिः सर्वेषां प्रयोजनानामिति यावत्, इतोऽधिकं फलं न विद्यते ॥

आत्मसिद्धेरेव पुरुषस्य परा निर्वृतिर्नान्यथेत्याह—

अद्भुताः सिद्धयः साध्या उपायान्तरतश्च याः ॥
ताः प्राप्तोऽपि भवत्यन्ते विचारेणैव निर्वृतः ॥७॥

याश्च सिद्धयोऽद्भुताः पामरदृष्टेराश्चर्यकर्यः उपायान्तरतः आत्मविचारादन्यैरुपायैः साध्याः ताः प्राप्तोऽपि पुरुषः अन्ते विचारेणैव उक्तेनात्मसिद्धिसाधनेनैव निर्वृतः निर्वृतिं प्राप्तो भवतीत्यर्थः । आत्यन्तिकश्रेयोलाभात् परमपुरुषार्थसिद्धेरन्यत्किमिष्यते? ॥

अथाधिकारिणमधिकृत्य प्रश्नः ॥

कार्ष्णिरुवाच—

एतस्यात्मविचारस्य प्राहुः कमधिकारिणम् ॥
अधिकारस्य सम्पत्तिः किं ज्ञातुं शक्यते स्वयम् ॥८॥

एतस्योक्तस्यात्मविचारस्य कमधिकारिणं प्राहुः? को वाऽधिकारीति पृष्टे किं स्वरूपोऽधिकार इति पृष्टं भवति । अधिकारस्य सम्पत्तिः स्वयं ज्ञातुं शक्यते किं? ममाधिकारोऽस्ति वेति यः कोऽपि पुरुषो निर्णेतुं शक्तो वेति प्रश्नः ॥

अस्य प्रत्युत्तरमाह त्रिभिः श्लोकैः ॥

भगवानुवाच—

उपासनादिभिः शुद्धं प्राग्जन्मसुकृतेन वा ॥
दृष्टदोषं मनो यस्य शरीरे विषयेषु च ॥९॥

उपासनादिभिः आदिशब्देन जपस्तोत्रपूजनानि ग्राह्याणि तैः शुद्धं वीतकलुषं प्राग्जन्मसुकृतेन वा अतीतजन्मस्वाचरितसत्कर्मणा वा शुद्धं केषाञ्चिद्विरलानां उपासनादीनि विनैव मनःपारिशुद्ध्यस्य सम्भवात् प्राग्जन्मेति विकल्पः कथितः । शरीरे विषयेषु च देहे इन्द्रियार्थेषु च दृष्टदोषं दृष्टो दोषोऽनात्मत्वादिः येन तत् मनो यस्य भवति तमधिकारिणं प्राहुरिति उत्तरश्लोकेनान्वयः ॥

मनसा चरतो यस्य विषयेष्वरुचिर्भृशम् ॥
देहे चानित्यताबुद्धि स्तं प्राहुरधिकारिणम् ॥१०॥

मनसा सह चरतो विचलतः शान्तिशून्यस्य यस्य पुरुषस्य विषयेषु भृशमधिकं यथा तथा अरुचिरस्पृहा भवति, देहेऽनित्यताबुद्धिश्च शरीरं नश्वरमिति निश्चयबुद्धिश्च भवति, तमधिकारिणं प्राहुः । शरीरे विषयेषु च दोषदर्शनं विषयेष्वरुचिर्देहे नश्वरताबुद्धिरित्येतानि अधिकारित्वाय प्रभवन्तीति भावः ॥

देहे नश्वरताबुद्धे वैराग्याद्विषयेषु च ॥
एताभ्यामेव लिङ्गाभ्यां ज्ञेया स्वस्याधिकारिता ॥११॥

अधिकारसम्पत्तिः स्वयं ज्ञातुं शक्यते किमित्यस्योत्तरमाह शक्यत एवेति । देहे नश्वरताबुद्धिरेकं लिङ्गम् । विषयेषु वैराग्यमन्यल्लिङ्गम् । एताभ्यां लिङ्गाभ्यां लक्षणाभ्यां स्वस्याधिकारिता ज्ञेया । स्वयमेव पुरुषः स्वस्याधिकारित्वं ज्ञातुं शक्तो भवति ॥

अथ शास्त्रविहितानुष्ठानानां प्रयोजनमधिकृत्य प्रश्नः ॥

कार्ष्णिरुवाच—

स्नानं सन्ध्याजपो होमः स्वाध्यायो देवपूजनम् ॥
सङ्कीर्तनं तीर्थयात्रा यज्ञो दानं व्रतानि च ॥१२॥

विचारे साधिकारस्य वैराग्याच्च विवेकतः ॥
किं वा प्रयोजनाय स्यु रुत कालविभूतये ॥१३॥

स्नानं शास्त्रविधिना काले कायस्य बाह्यशोधनं सन्ध्याजपः सन्ध्ययोर्विहितो गायत्र्यादिजपः होमोऽग्निहोत्रं स्वाध्यायो वेदाध्ययनं देवपूजनं सङ्कीर्तनं भगवन्नाम-भजनं तीर्थयात्रा गङ्गादितीर्थयात्रा पुण्यक्षेत्रयात्रा वा यज्ञः पञ्चमहायज्ञोऽग्निष्टोमादिर्वा, दानमन्येभ्यो द्रव्यार्पणं व्रतानि चान्द्रायणादीनि एतानि, वैराग्याद्विषयेष्विति शेषः, विवेकतश्चात्मानात्मनोरिति ग्राह्यः । चकाराद्वाभ्यामपि विचारे साधिकारस्य प्राप्त-विचाराधिकारस्य पुरुषस्येति यावत् "प्रयोजनाय किं वा स्युः" फलप्रदानि भवेयुः किं उत अथवा कालविभूतये केवलं कालक्षेपाय भवेयुरिति प्रश्नः ॥

भगवानुवाच—

आरम्भिणां क्षीयमाण रागाणामधिकारिणाम् ॥
कर्माण्येतानि सर्वाणि भूयस्यै चित्तशुद्धये ॥१४॥

एतानि शास्त्रविहितस्नानसन्ध्याजपादीनि कर्माणि आरम्भिणामात्मविचार-मारब्धवतां, न तु तत्र पदे पदे वर्धमानानां वृद्धानां वा, क्षीयमाणरागाणां क्षयं प्राप्नुवन्नेव रागो येषां तेषां न तु क्षीणरागाणां सिद्धवैराग्याणामिति यावत् । अधि-कारिणामुक्तलक्षणाधिकारसम्पन्नानां न तु असत्यामप्यधिकारसम्पत्तौ आत्मविचारप्रार-म्भिणां, ईदृशां पुरुषाणां "भूयस्यै चित्तशुद्धये" बहुतरां सत्त्वशुद्धिसम्पादनाय प्रभवन्तीति शेषः । साधिकारात्मविचारप्रवृत्तानामारम्भदशायां कर्मानुष्ठानानि चित्त-शुद्धिप्रदानि, न तु कर्मैव परमिति मन्वानानामिति भावः ॥

अथ कर्मणश्चित्तशुद्धिप्रदत्वं निरूपयति—

यत्कर्म सुकृतं प्रोक्तं मनोवाक्कायसम्भवम् ॥
तत्तु कर्मान्तरं हन्ति मनोवाक्कायसम्भवम् ॥१५॥

मनोवाक्कायसम्भवं मनसो वाचः कायात् शरीराच्च सम्भवो उद्भवो यस्य तत्, सत्कर्म अनुष्ठितं कार्यं सुकृतं सत्कर्म प्रोक्तम् । तत्तु तदेव मनोवाक्कायसम्भवं कर्मान्तरं अन्यत्कर्म दुष्कृतमिति यावत्, हन्ति व्यपोहति, शल्यं शल्यान्तरमिवोद्धरति । तु अवधारणे । सत्कर्मणैव साध्यो दुष्कर्मध्वंसः । ज्ञानेन तु सुकृतदुष्कृतयोरुभयोः प्रणष्टिः । अतो दुष्कृतमात्रनाशाय सुकृतमेव प्रभवति । ततश्चित्तशुद्धिः फलति ॥

शुद्धसत्त्वानां कर्मणोऽनुपयोगित्वेऽपि किमर्थं कर्म कुर्वन्ति एके साधवः? आह—

**अत्यन्तशुद्धमनसां पक्वानामधिकारिणाम् ॥**
**इदं लोकोपकाराय कर्मजालं भविष्यति ॥१६॥**

अत्यन्तशुद्धमनसां अत एव पक्वानामधिकारिणां पुरुषाणां कर्मसाध्यस्यार्थविशेषस्यासत्त्वेऽपि "इदं कर्मजालं" तैः क्रियमाणः सर्वोऽपि कर्मसमुदाय इत्यर्थः, लोकोपकाराय भविष्यति । इदंशब्देन पक्वपुरुषैः क्रियमाणस्य कर्मणः स्थूलदृष्टिगोचरत्वं द्योत्यते । पक्वानां मानसिकानि कर्माणि लोकश्रेयस्कराणीति सिद्धम् । कायिककर्माणि च ते कुर्वन्ति । तानि लोकमुपकुर्वत इति भावः । तथा परिपक्वपुरुषाणां कर्म स्वतन्त्रं प्रवर्तते न विधिचोदनयेत्याह—

**परेषामुपदेशाय क्षेमाय च मनीषिणः ॥**
**पक्वाश्च कर्म कुर्वन्ति भयान्नादेशशास्त्रतः ॥१७॥**

परेषामितरेषामुपदेशाय सन्मार्गप्रदर्शनाय क्षेमाय निःश्रेयसाय च मनीषिणो धीमन्तः पक्वाश्च सिद्धाः ज्ञानिन इति यावत्, कर्म कुर्वन्ति आचरन्ति । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति हि स्मर्यते । "आदेशशास्त्रतो भयान्न" 'सन्ध्यामुपासीत' 'इदं कुर्यात्' इति विधिपरेभ्यः शास्त्रेभ्यो भयात् विहितकर्माकरणजन्यपापभयात् कर्म नाचरन्ति महापुरुषाः । अकरणे प्रायश्चित्तं वा नाभिजानते । न वैषां पापफलनरकावाप्तिभीतिर्वा । नापि शास्त्रविहितं कर्मैव कुर्वन्ति । मनसा वाचा कायेन च यद्यत्कर्म तेभ्यः स्वतन्त्रतया प्रवर्तते तत्सर्वं परोपदेशकं परक्षेमावहं च भवति ॥

अथ कर्मणः पावनत्वमाह—

**विचारप्रतिकूलानि न पुण्यानि नरर्षभ ॥**
**क्रियमाणान्यसङ्गेन भेदबुद्ध्युपमर्दिना ॥१८॥**

नरर्षभ नरश्रेष्ठ भेदबुद्ध्युपमर्दिना भेददृष्टिध्वंसनेन असङ्गेन निःसङ्गेन निर्लेपनेति यावत् क्रियमाणानि कर्माणि पुण्यानि पावनानि, न विचारप्रतिकूलानि आत्मविचार-विरोधीनि भवन्ति । साहङ्कारेण कर्मणा क्रियमाणेन हि विषयेषु सङ्गो विवर्धते, निर-हङ्कारेण तु सङ्गो हीयते । निःसङ्गतायां भेददृष्टेर्विनिष्टिः । अतोऽसङ्गकृतानां कर्मणां विचारप्रतिबन्धकत्वं न भवति, तेषां पावनत्वात् । तथा चोक्तम्— "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इति ॥

अथ पक्वपुरुषेण क्रियमाणं कर्म स्वतन्त्रतया प्रवर्तते, न तु कर्तव्यताधियेत्यतस्तस्य कर्माकरणं न दोषायेत्याह—

**न चाकृतानि पापाय पक्वस्यात्मविमर्शिनः ॥**
**स्वविमर्शो महत्पुण्यं पावनानां हि पावनम् ॥१९॥**

पक्वस्य सिद्धस्यात्मविमर्शिनः आत्मनिष्ठस्य अकृतानि कर्माणि 'पापाय न' कर्माकरणं न तस्य पापं भवति । कर्तुमकर्तुमन्यथा वा कर्तुमीशः स्वात्मनिष्ठः । अकर्म-णा कर्मणा वा न बध्यते बाध्यते वा । न किमपि तस्य पापाय भवति । हि यतः स्वविमर्शः आत्मविचारः पावनानां च पावनं महत्पुण्यमनुत्तममसमाभ्यधिकं पुण्यं भवतीति यावत् । पक्वस्याप्यधिकारिणोऽन्तर्मुखस्थितिर्बाह्येन कर्मणा बाधिता स्यादिति चेन्नेति वक्ष्यन्नात्मनिष्ठायाः द्वैविध्यमाह—

**दृश्यते द्विविधा निष्ठा पक्वानामधिकारिणाम् ॥**
**त्याग एकान्तयोगाय परार्थं च क्रियादरः ॥२०॥**

पक्कानामधिकारिणां द्विविधा निष्ठा दृश्यते । एकस्या एव निष्ठायाः द्वैविध्यं दृश्यते । किं तत्? 'एकान्तयोगाय त्यागः' निर्विकल्पनिष्ठायै कर्मपरित्यागः एकं रूपं निष्ठायाः । अन्यत्तु 'परार्थं च क्रियादरः' अन्यनिमित्तं कर्माचरणम् । अत्र निष्ठा-द्वैरूप्यमभिप्रेतम् । एकैव हि निष्ठा निर्विकल्पसमाधौ सहजात्मस्थितौ च प्रतिपादिता ।

"गृह्णतोऽपि स्थिरैका धीः सहजा स्थितिरुच्यते ।
निर्विकल्पः समाधिस्तु विषयासन्निधौ भवेत् ॥" इति ॥

परार्थं क्रियमाणेषु कर्मसु स्वात्मनिष्ठा नैव बाध्यते । तस्मादेकस्यैव पुरुषस्य कर्मादरः कर्मत्याग इति द्वयं च सम्भवति । अधिकारिणः साधकस्यापि एकान्तयोग-साधनार्थकर्मपरित्यागः परार्थक्रियादरश्चोभावपि शक्यौ, किमुत सिद्धस्य महापुरुषस्य यः "कर्मण्यकर्म पश्येदकर्मणि च कर्म"। द्विविधा निष्ठा दृश्यत इत्युक्तं न तूपदिश्यते विधीयत इति वा । अनेन एकान्तयोग एव कैश्चित् क्रियादरं विना स्थीयेत, एकान्त-योगात्मकं निर्विकल्पसमाधिं विनाऽपि क्रियादरवद्भिः कैश्चित्सहजात्मनिष्ठैःस्थीयेत इति च प्रतिपादितं भवति । एकस्मिन्नेव उभयस्य सम्भवस्तु प्राग्व्याख्यातः । दृश्यत इत्यनेन द्विविधमाचरतां महापुरुषाणां चर्यां चक्षुष्मन्तः पश्यन्तीति द्योतितम् ॥

कार्ष्णिरुवाच—

**निर्वाणायास्ति चेदन्यो मार्ग आत्मविचारतः ॥**
**एको वा विविधस्तं मे भगवान्वक्तुमर्हति ॥२१॥**

अथायं कार्ष्णेरन्यः प्रश्नो भवति । निर्वाणाय मोक्षाय आत्मविचारतोऽस्मात् पूर्वोक्तादन्यो मार्गोऽस्ति चेत् स एको वा विविधो वा तं मे भगवान्वक्तुमर्हति । स्पष्टम् ॥

भगवानुवाच—

**एकः प्राप्तुं प्रयतते परः प्राप्तारमृच्छति ॥**
**चिराय प्रथमो गच्छन् प्राप्नोत्यात्मानमन्ततः ॥२२॥**

ज्ञानादेव मोक्षः, तस्य च ज्ञानस्यात्मविचारः साक्षात्साधनमिति बहुधोपन्यस्तम् । इहान्यत्साधनमस्ति वा न वेति पृष्टो भगवान्महर्षिर्ध्यानस्यापि साधनतामभ्युपगम्य ध्यानमार्गस्य विचारमार्गस्य च भेदनिरूपणेन आत्मस्वरूपान्वेषणादिरूपाद्विचारादन्यत्र साक्षात्साधनं नास्त्येवेत्यब्रुवाणः प्रतिवचनमनुगृह्णाति । "एकः प्राप्तुं प्रयतते" ध्याता पुरुषः आत्मलाभाय प्रयतमानो वर्तते । "परः प्राप्तारमृच्छति" आत्मविचारी पुरुषः प्रयतमानः आत्मनः प्राप्ता क इति पश्यति । अत्र प्रथमे मार्गे प्राप्ता प्राप्तव्यमिति द्वैतात्मिकया मानस्या वृत्त्या ध्याने प्रयत्नः क्रियते । विचारे तु ध्यातृध्येयात्मिका वृत्तिरेव निवर्तते, न प्रवर्तते । सर्वप्रयत्नकृतोऽहंवृत्तेरेवं मूलस्वरूपान्वेषणनिमज्जनद्वारा स्वात्मस्वरूपे निवृत्तिर्भवति । प्राप्तारमृच्छतीत्यत्र प्राप्ता अहङ्कारः तमृच्छति प्राप्नोति । कः? आत्मैव । प्राप्तिश्चात्मनः अहङ्कारग्रासरूपा, "अहङ्कृतिं यो लसति ग्रसित्वा........ किञ्चिद्विजानाति स नात्मनोऽन्यत्" इति ह्युपदेशो भगवन्महर्षेः । उत्तरार्धं स्पष्टम् ॥

यद्यपि ध्यानस्य साक्षात्साधनता नोच्यते, तथाऽपि चित्तैकाग्र्यसम्पत्तिद्वारा ज्ञानसाधनत्वं भवतीत्याह—

एकस्य ध्यानतश्चित्त मेकाकृति भविष्यति ॥
एकाकृतित्वं चित्तस्य स्वरूपे स्थितये भवेत् ॥२३॥

एकस्य ध्यातुर्ध्यानतः साधनात् चित्तमेकाकृति एकरूपमेकाग्रं भविष्यति । चित्तस्य एकाकृतित्वं स्वरूपस्थितये स्वात्मनिष्ठायै भवेत् । एवं परम्परासम्बन्धेन ध्यानस्य मन्त्रजपादेरिव चित्तशुद्ध्यर्थकर्माचरणस्येव ज्ञानसाधनत्वमुक्तम् ॥

अथात्मप्राप्तिमनिच्छतोऽपि एकाग्रध्यानतः सा सिद्ध्यतीत्याह—

अनिच्छयाऽप्यतो ध्यायन् विन्दत्यात्मनि संस्थितिम् ॥
विचारकस्तु विज्ञाय भवेदात्मनि संस्थितः ॥२४॥

अनिच्छयाऽपि ध्यानेनात्मानं विन्देयमितीच्छाभावेऽपि ध्यायन् पुरुषः आत्मनि संस्थितिं विन्दति । विचारकः स्वात्मविचारप्रवृत्तः पुरुषस्तु तुशब्दो ध्यातृपुरुष-

व्यावृत्त्यर्थः । विज्ञाय स्वरूपं विदित्वाऽऽत्मनि संस्थितो भवेत् । ज्ञानसाधनेन ज्ञानसिद्धिस्तस्येत्युक्तं भवति ॥

ध्यायतो देवता मन्त्र मन्यद्वा लक्ष्यमुत्तमम् ॥
ध्येयमात्ममहाज्योति ष्यन्ततो लीनतां व्रजेत् ॥२५॥

देवताः ईश्वरमूर्तीरिन्द्राद्याः, मन्त्रं शिवविष्ण्वादित्यादिदेवताप्रसादसम्पादकं मन्त्रविशेषं 'अन्यद्वा उत्तमं लक्ष्यं' भौतिकं मानसिकं वा मूर्तिविशेषं नादविशेषं ज्योतिर्विशेषं वा लक्ष्यत्वेन गृहीत्वा ध्यायतः एकाग्रतया तत्र मानसं निदधतः पुरुषस्य ध्येयं ध्यानविषयभूतं लक्ष्यं अन्ततः अन्ते 'आत्ममहाज्योतिषि लीनतां व्रजेत्' आत्मरूपे महति ज्योतिषि लीयत इत्यर्थः । सर्वस्यापि ध्यानस्य ध्यातृध्येयाभ्यां सह आत्मस्वरूपे पर्यवसानमिति भावः ॥

अथोपसंहरति—

गतिरेवं द्वयोरेका ध्यातुश्चात्मविमर्शिनः ॥
ध्यायन्नेकः प्रशान्तः स्यात् अन्यो विज्ञाय शाम्यति ॥२६॥

ध्यातुः ध्यातृध्येयात्मकद्वैतबुद्ध्या साधनमाचरतः आत्मविमर्शिनः निरुपाधिविमर्शयोगनिष्ठस्य द्वयोश्च एका गतिः पर्यवसानं समानमिति भावः । एकः ध्यायन् ध्यानं साधनं कुर्वन् प्रशान्तः स्यात् परां शान्तिं प्राप्नोति । अन्यो विचारवान् 'विज्ञाय शाम्यति' स्वरूपविज्ञानेन शान्तो भवतीति भावः ॥

॥ इति सप्तमोऽध्यायः ॥

# ॥ अष्टमोऽध्यायः ॥

अस्मिन्नध्याये आश्रमप्रयोजनादि विचार्यते ॥

काष्र्णेरेवापरं प्रश्नं निशम्य भगवान्मुनिः ॥
चातुराश्रम्यसम्बद्ध मधिकारं न्यरूपयत् ॥१॥

काष्र्णेरेव पूर्वाध्याये यः प्रष्टा तस्यैव अपरं अन्यं प्रश्नं भगवान्मुनिर्महर्षिर्निशम्य श्रुत्वा चातुराश्रम्यसम्बद्धं चत्वार आश्रमास्त एव चातुराश्रम्यं ब्रह्मचर्यादि तेन सम्बद्धं अधिकारं विषयं न्यरूपयत् प्रत्यपादयत् ॥

ब्रह्मचारी गृही वाऽपि वानप्रस्थोऽथवा यतिः ॥
नारी वा वृषलो वाऽपि पक्को ब्रह्म विचारयेत् ॥२॥

ब्रह्मचारी प्रथमाश्रमी उपनीतः, गृही गृहस्थः, वानप्रस्थस्तृतीयाश्रमी, यतिर्वा तुरीयाश्रमी वा नारी स्त्री वा वृषलः शूद्रो वा पक्कः परिपाकवान् ब्रह्म आत्मस्वरूपेण हृदयेऽवस्थितं स्वरूपं विचारयेत् । सन्यासिनामेव ज्ञानेऽधिकारः, स्त्री-शूद्राणां नास्त्येवाधिकार इत्येके । तन्नेत्याह । स्त्री-शूद्राणां वेदादिशास्त्राध्ययनस्यैव निषेधः, न त्वेषामात्मविचारानधिकारः । परिपाक एवाधिकारित्वाय प्रभवति न वर्ण आश्रमो वा ॥

अथ आश्रमव्यवस्थायाः प्रयोजनमाह—

सोपानवत्परं प्राप्तुं भविष्यत्याश्रमक्रमः ॥
अत्यन्तपक्कचित्तस्य क्रमापेक्षा न विद्यते ॥३॥

आश्रमक्रमः ब्रह्मचर्याश्रमादीनां पौर्वापर्यक्रमः परं ब्रह्म प्राप्तुं सोपानवद्भविष्यति । आरोहणपद्याघट्टवत् । आश्रमक्रमानपेक्षं कैश्चित् परं प्राप्तुं शक्यते । तदाह— 'अत्यन्त पक्कचित्तस्य क्रमापेक्षा न विद्यते' । पक्कताया एवाधिकारप्राप्तेः । 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति हि श्रूयते । आश्रमक्रमस्यास्त्येव प्रयोजनम् । तदाह—

गतये लोककार्याणा मादिशन्त्याश्रमक्रमम् ॥
आश्रमत्रयधर्माणां न ज्ञानप्रतिकूलता ॥४॥

लोककार्याणां गतये प्रचलनाय आश्रमक्रमं चातुर्विध्यव्यवस्थात्मकं आदिशन्ति शास्त्राणीति शेषः । तुरीयाश्रमस्यैव ज्ञानानुकूलत्वं न त्वितरस्याश्रमत्रयस्येति मन्तव्यमित्याह । 'आश्रमत्रयधर्माणां न ज्ञानप्रतिकूलता' स्वाश्रमधर्मं यथाविधि अनुतिष्ठतो ब्रह्मचारिणो गृहिणो वानप्रस्थस्य वा न ज्ञानप्रतिबन्धकं धर्माचरणम् ॥

अथ सन्न्यासस्वरूपमाह—

**सन्न्यासो निर्मलं ज्ञानं न काषायो न मुण्डनम् ॥**
**प्रतिबन्धकबाहुल्य- वारणायाश्रमो मतः ॥५॥**

स्पष्टम् । सन्न्यासस्य स्वरूपं ज्ञानं, न बाह्यं काषायमुण्डनादि । तत्तु आश्रमलक्षणम् । तर्हि व्यर्था सन्न्यासाश्रमव्यवस्थेति न । ज्ञानसाधनदशायां विरक्तस्यापि पुरुषस्य बहुलविघ्नसम्भवात् तन्निवृत्त्यर्थो ह्याश्रमविधिः । अथ ज्ञानसिद्धेः सोपानस्थानीयं आश्रमक्रमं निरूपयिष्यन् प्रथमाश्रमप्रयोजनमाह—

**ब्रह्मचर्याश्रमे यस्य शक्तिरुज्जृम्भते व्रतैः ॥**
**विद्यया ज्ञानवृद्ध्या च स पश्चात्प्रज्वलिष्यति ॥६॥**

यस्य ब्रह्मचर्याश्रमे व्रतैः शास्त्रोक्तनियमैः विद्ययाऽभ्यस्यमानया ज्ञानवृद्ध्या मेधाभिवृद्ध्या च शक्तिरुज्जृम्भते, स पश्चाद्गार्हस्थ्यस्वीकारे प्रज्वलिष्यति । यथाविधि ब्रह्मचर्यधर्ममाचरतो गृहित्वे क्रमेण प्राप्ते साधु गार्हस्थ्यं सम्भवति ॥

अथ गार्हस्थ्यं प्रस्तौति—

**ब्रह्मचर्येण शुद्धेन गृहित्वे निर्मलो भवेत् ॥**
**सर्वेषामुपकाराय गृहस्थाश्रम उच्यते ॥७॥**

शुद्धेन यथाशास्त्रमनुष्ठितेन ब्रह्मचर्येण साधनेन गृहित्वे गृहस्थाश्रमस्वीकारे निर्मलो भवेत् विषयोपभोगसङ्गेन कालुष्यमप्रापितो भवेत् पुरुष इत्यध्याहारः । सर्वेषामाश्रमिणामुपकाराय गृहस्थाश्रम उच्यते व्यवस्थापित इति भावः ॥

सर्वथा वीतसङ्गस्य गृहस्थस्यापि देहिनः ॥
परं प्रस्फुरति ज्योति स्तत्र नैवास्ति संशयः ॥८॥

सर्वथा सर्वेणापि प्रकारेण वीतसङ्गस्य गृहस्थस्यापि गृहस्थस्य पामरत्वमेव शरणं न ज्ञानस्यावकाश इति सामान्यप्रतीतिः, तस्मादपीत्युक्तम् । प्रतिबन्धकबाहुल्येऽपि पूर्वाश्रमप्राप्तविद्याज्ञानव्रतोज्ज्वलो यो निस्सङ्गो व्यवहरति, तस्य देहिनः परं ज्योतिः प्रस्फुरति स्वरूपप्रकाशः सिद्ध्यति । तत्र विषये नैवास्ति संशयः ॥

अथ वानप्रस्थाश्रममाह—

तपसस्त्वाश्रमः प्रोक्त स्तृतीयः पण्डितोत्तमैः ॥
अभार्यो वा सभार्यो वा तृतीयाश्रमभाग्भवेत् ॥९॥

स्पष्टम् । तपश्चरणाय तृतीय आश्रमः प्रोक्तः । भार्यया सहितो रहितो वा तपसि तिष्ठति वानप्रस्थः सम्पूर्णं परिपाकं साधयितुम् ॥

अथ सन्यासः—

तपसा दग्धपापस्य पक्वचित्तस्य योगिनः ॥
चतुर्थ आश्रमः काले स्वयमेव भविष्यति ॥१०॥

तपसा पूर्वाश्रमाचरितेन दग्धपापस्य निष्कल्मषस्य असङ्गस्येति यावत् । पक्व-चित्तस्य परिपूर्णचित्तपरिपाकस्य योगिनः काले सिद्धिकाले चतुर्थ आश्रमः [illegible] स्वयमेव भविष्यति ॥

एष प्रागुक्त एवाब्दे त्वष्टमे द्वादशे पुनः ॥
उपदेशो भगवतः सप्तमाष्टमयोरभूत् ॥११॥

१९१७ वत्सरे अष्टमे आगस्ट् मासि द्वादशे दिवसे भगवतो महर्षेः सप्तमस्याष्टमस्य चाध्यायस्योपदेशोऽभूत् ॥

॥ इति अष्टमोऽध्यायः ॥

# ॥ नवमोऽध्यायः ॥

नवमेऽस्मिन्नध्याये ग्रन्थिभेदो निरूप्यते—

चतुर्दशेऽष्टमे रात्रौ महर्षिं पृष्टवानहम् ॥
ग्रन्थिभेदं समुद्दिश्य विदुषां यत्र संशयः ॥१॥

अष्टमे आगस्ट्मासि चतुर्दशे दिवसे रात्रौ ग्रन्थिभेदं समुद्दिश्य हृदयग्रन्थिविभेदमधिकृत्य महर्षिमहं पृष्टवान् । ग्रन्थकृदेव प्रष्टेति ज्ञेयम् । यत्र विषये विदुषां संशयो भवति । किंरूपो ग्रन्थिः किंलक्षणं तद्भेदनं किंप्रयोजनं चेति प्रश्नस्य प्रतिवचनमभ्यर्थितम् ॥

तमाकर्ण्य मम प्रश्नं रमणो भगवानृषिः ॥
ध्यात्वा दिव्येन भावेन किञ्चिदाह महामनाः ॥२॥

भगवान् रमणो महर्षिः ग्रन्थिभेदविषयकं मम प्रश्नमाकर्ण्य किञ्चिद्ध्यात्वा प्रत्युत्तरानुजिघृक्षया किञ्चित्कालं ध्यानमास्थाय आह उक्तवानुत्तरमिति शेषः ॥

शरीरस्यात्मनश्चापि सम्बन्धो ग्रन्थिरुच्यते ॥
सम्बन्धेनैव शारीरं भवति ज्ञानमात्मनः ॥३॥

शरीरस्य पाञ्चभौतिकस्य देहस्य स्वतोऽप्रकाशस्य, आत्मनो ज्ञातुः स्वतःप्रकाशस्य उभयोश्चापि सम्बन्धो ग्रन्थिरुच्यते । देहात्मबन्धो ग्रन्थिरुक्तः । तत्स्वरूपं क्रमशो

विवरिष्यते । देहात्मबन्धरूपेण सम्बन्धेनैव आत्मनः शारीरं ज्ञानं भवति । पञ्चमाध्याये हृदयाज्ज्योतिः प्रस्थाय सहस्रारं प्रवहति सहस्रारादेहं प्रवहति तदा शारीरं ज्ञानं लोकानुभूतयश्चेत्युक्तम् । अत्र देहात्मबन्धरूपात् ग्रन्थेरेव शारीरं ज्ञानं ततो लोकानुभवश्चेत्युक्तं भवति । सत्येव देहात्मबन्धे ज्ञानज्योतिर्हृदयात्सहस्रारं तस्मादेहं च प्रवहतीति गम्यते ॥

कथं सम्बन्धो देहात्मनोरुच्यत इति चेदाह—

शरीरं जडमेतत्स्यात् आत्मा चैतन्यमिष्यते ॥
उभयोरपि सम्बन्धो विज्ञानेनानुमीयते ॥४॥

'शरीरमेतत् जडं स्यात्' अचेतनं दृश्यं प्रकाश्यं च भवति । आत्मा चैतन्यं द्रष्टृ अदृश्यं स्वप्रकाशं च भवति । उभयोरपि सम्बन्धो 'विज्ञानेनानुमीयते' अनुमानेन प्रमीयत इत्यर्थः । विज्ञानशब्द इह बुद्धिपर्यायो न स्वरूपज्ञानवाची । तत्रानुमानमसङ्गतं स्वरूपज्ञानस्यापरोक्षत्वात् । कथमूह्यते देहात्मसम्बन्धः? देहो जडो न स्वयं किमपि करोति । आत्मा चैतन्यं स्वतः प्रकाशतेऽपि तु निश्चलः पूर्णत्वात् । उभयोरसति सम्बन्धे कथं ज्ञानक्रियाव्यापारः सिद्ध्यति देहे देहिनः ? तस्मात् कोऽपि सम्बन्धः स्यात् कार्यकारणभावो भास्यभासकभावो वा येन देहो मदीय इत्यभिमानो देहोऽहमिति बुद्धिश्च जायेते । इदं पुनर्विवृणोति ॥

चैतन्यच्छायया श्लिष्टं शरीरं तात चेष्टते ॥
निद्रादौ ग्रहणाभावा दूह्यते स्थानमात्मनः ॥५॥

शरीरं जडं स्वतो निश्चेष्टमपि चैतन्यच्छाययाऽऽत्मप्रभया चित्प्रकाशेनेति यावत् । आश्लिष्टमालिङ्गितं, व्याप्तमित्यर्थः सत् चेष्टते । व्यापारवद्भवति । शरीरे चैतन्योदयस्थानं स्यात् यस्मादुदेत्य देहं प्राप्नोति चित्प्रभा, यस्मिन्नेव प्रतिष्ठिता निद्रायां निवर्तते । अत आह । निद्रादौ आदिशब्देन मूर्छालयसमाधयो ग्राह्याः । ग्रहणाभावादेहात्म-

बुद्धिद्वारा लोकज्ञानस्यासत्त्वात् आत्मनः स्थानमूह्यते । आत्मस्थानमस्त्येव देहे, यत्र सुषुप्तौ वृत्तय उपसंहृताः पुनर्जागरणे उदिताश्च भवन्तीति बोध्यम् ॥

चैतन्यव्यापनप्रकारं दृष्टान्तेनोदाहरति—

सूक्ष्माणां विद्युदादीनां स्थूले तन्त्र्यादिके यथा ॥
तथा कलेबरे नाड्यां चैतन्यज्योतिषो गतिः ॥६॥

यथा सूक्ष्माणां चक्षुषोऽदृश्यानां विद्युदादीनां ज्योतिषां स्थूले दृश्ये घनवस्तुनि तन्त्र्यादिके लोहविशेषकृततन्तुरूपे गतिर्गमनव्यापारो भवति, तथा कलेबरे स्थितायां नाड्यां चैतन्यज्योतिषो गतिरवगन्तव्या । अत्रेदमवधेयम् । वैद्युतज्योतिराविष्कारक-यन्त्रस्थानीयं हृदयमात्मस्थानम् । तन्त्रीस्थानीया नाडी यया चैतन्यज्योतिः प्रवहति ॥

अथ हृदयस्वरूपस्य भासकत्वं विशदयति—

स्थलमेकमुपाश्रित्य चैतन्यज्योतिरुज्ज्वलम् ॥
सर्वं भासयते देहं भास्करो भुवनं यथा ॥७॥

उज्ज्वलं स्वयं प्रकाशमानं चैतन्यज्योतिर्ज्ञानात्मकमेकं स्थलमुपाश्रित्य एकत्र स्थाने स्थितं सत् सर्वं देहं भासयते । यथा भास्करः सहस्रभानुर्भुवनं जगद्भासयते, तथाऽऽत्मज्योतिर्देहं व्याप्य प्रकाश्य चेष्टयतीति भावः ॥

प्रकाशमूलस्थानमाह—

व्याप्तेन तत्प्रकाशेन शरीरे त्वनुभूतयः ॥
स्थलं तदेव हृदयं सूरयः सम्प्रचक्षते ॥८॥

व्याप्तेन शरीरं सर्वं व्याप्य ज्वलता तत्प्रकाशेन तस्य चैतन्यस्य प्रकाशेन शरीरेऽनुभूतयो भवन्ति । तदेव स्थलं, यदुपाश्रित्य प्रकाशो व्याप्नोति, हृदयं सम्प्रचक्षते सूरय आत्मस्वरूपविदः ॥

अथैकैव चैतन्यांशुवाहिनी नाडी, इतरा नाड्यो देहधारणार्था इत्याह--

**नाडीशक्तिविलासेन चैतन्यांशुगतिर्मता ॥**
**देहस्य शक्तयः सर्वाः पृथङ्नाडीरुपाश्रिताः ॥९॥**

नाडीनां शक्तेर्विलासेन व्यापारेण चैतन्यांशुगतिर्मता चैतन्यरश्मिः प्रवहतीति भावः। देहस्य सर्वाः शक्तयो ज्ञानक्रियात्मिकाः प्राणेन मनसा च कर्मेन्द्रियज्ञानेन्द्रिय-व्यापारवत्यः पृथङ्नाडीरुपाश्रिताः। प्रत्येकं बहुधाऽवक्लृप्तानां नाडीनां द्वारैव तदाश्रयाः सत्यो विजृम्भिता भवन्तीत्यर्थः ॥

**चैतन्यं तु पृथङ्नाड्यां तां सुषुम्नां प्रचक्षते ॥**
**आत्मनाडीं परामेके परे त्वमृतनाडिकाम् ॥१०॥**

यद्यपि बह्व्यो नाड्यस्तत्तद्व्यापारनिर्वाहिकाः शक्तीः पृथग्वहन्ति, तथाऽपि तत्रैका नाडी चैतन्यस्थितिकेत्याह । चेतन्यं पृथङ्नाड्यां प्रत्येकमवस्थितायां नाड्यां विलसतीत्यध्याहार्यम्। तां सुषुम्नां प्रचक्षते योगिन इति शेषः। एके विदस्तामात्मनाडीं परां वदन्ति। परे तु अमृतनाडिकां वदन्ति। "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका" इति श्रूयते । यद्यपि सर्वा नाड्यो हृदयमाश्रित्य प्रवर्तन्ते, तथाऽपि तत्रैकैव चैतन्यवाहिनी, सा च सहस्रारं प्राप्य ततो देहलोकानुभूतिभ्यः प्रवहति, तां नाडीं कैवल्यामृतात्मसुषुम्नापरादिशब्दव्यवहार्यां चैतन्यनाडीं वदन्ति। अन्याश्च नाड्यो बह्व्यो देहे इतरशक्तिव्यापारकुल्या इति भावः ॥

अथ स्वरूपेऽनवस्थितस्य देहात्मबुद्धिर्भवतीत्याह—

**सर्वं देहं प्रकाशेन व्याप्तो जीवोऽभिमानवान् ॥**
**मन्यते देहमात्मानं तेन भिन्नं च विष्टपम् ॥११॥**

अभिमानवान् जीवः सर्वं देहं प्रकाशेन व्याप्तः, आत्मानं देहं मन्यते, तेन विष्टपं च भिन्नं भवतीति योजना। अभिमानश्च इदंप्रत्ययगोचरं पुरः स्थितं वाऽभिमुखी-

भूय स्वीयत्वेन तस्य वेदनं, तद्वानभिमानी जीवः सर्वं शरीरं प्रकाशावृतं स्वीयत्वेनाभि-
मान्य अनन्तरं प्रकाश्यप्रकाशकयोर्देहात्मनोर्भेदमपश्यन् देहोऽहमिति मन्यते । तस्मात्
देहात्मधियो जीवस्य लोकः आत्मनो भिन्नतया प्रतिभासते । देहे स्वात्मस्थानं विहाय
चरतो जीवस्य देहाभिमानो देहात्मबुद्धिरिति द्वयं बन्धकं भवति । तस्मादस्य निवृ-
त्त्युपायमुपन्यस्यति ॥

अभिमानं परित्यज्य देहे चात्मधियं सुधीः ॥
विचारयेच्चेदेकाग्रो नाडीनां मथनं भवेत् ॥१२॥

अभिमानं ममेदमित्यभिमानं परित्यज्य विहाय, देहे आत्मधियं च देहात्म-
भावं च त्यक्त्वेति भावः, सुधीः शोभना बुद्धिरात्मविषया यस्य स एकाग्रोऽविक्षिप्त-
चित्तः सन् विचारयेच्चेत् स्वरूपविचारं कुर्याच्चेत्, नाडीनां मथनं भवेत् । विक्षिप्तासु
वृत्तिषु आत्मस्वरूपं विहाय भ्रमन्तीषु, चित्प्रकाशे च देहग्रस्ते, हृदयस्थात्मेतरनाड्यो
देहात्मबन्धिकाः शक्तीर्वहन्ति । एकाग्रतया विचारे क्रियमाणे एकस्यामात्मनाड्यामेव
ज्योतिर्ज्वलितुमारभते । तेनेतरनाडीनां देहात्मबन्धशैथिल्याय मथनं भवेत् ॥

अथ नाडीमथनप्रयोजनमाह—

नाडीनां मथनेनैव मात्मा ताभ्यः पृथक्कृतः ॥
केवलाममृतां नाडी माश्रित्य प्रज्वलिष्यति ॥१३॥

एवं अनेन प्रकारेण एकाग्रतया आत्मस्वरूपविचारे क्रियमाणे यन्नाडीनां मथनं
निष्पद्यते, तेन मथनेन ताभ्यो नाडीभ्य आत्मा पृथक्कृतः प्रत्येकतां प्राप्तः केवलामेका-
मवशिष्टां शुद्धामिति यावत्, अमृतामेतदाख्यां हृदयज्योतिर्वाहिनीं नाडीमाश्रित्य प्र-
ज्वलिष्यति । यथा क्षीरमथनेनामृतलाभस्तथा विचारकार्यनाडीमथनेनात्मस्वरूपलाभः ।
आत्मनो नित्यशुद्धबुद्धमुक्तस्वभावत्वे आत्मविद्भिः साक्षात्कृत्य प्रतिपादिते, श्रुतिवचनेभ्यश्च
सिद्धे, कथमयमात्मा पृथक्कृतः प्रज्वलिष्यतीति माभूच्छङ्का । अनात्मनो देहादेः
सत्त्वादात्मनः पृथक्करणमुक्तम् । नित्यशुद्धबुद्धत्वादि बन्धमोक्षरहितत्वादि च आत्मस्वरूप-

अधिकृत्य सिद्धैर्विद्भिरुक्तम् । पृथक्करणं तु मनःप्राणसहितशरीरमधिष्ठाय वर्तमानं स्वरूपाकारवृत्तिरूपं अहंप्रत्ययाश्रयं निरहङ्कारमहंस्फूर्तिरूपमात्मानमधिकृत्योपदिष्टम् । यद्यपि शास्त्रविचारिणां शरीरात्मपृथक्करणक्लेशो न भवेत्, स्वरूपविचारात्मकमुपासन-माश्रयमाणानां शरीरिणां शरीरादात्मपृथक्करणमनपोह्यम् । तथा च हृदि सन्निविष्टमन्त-रात्मानमधिकृत्य श्रुतिराह– "तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण" इति ॥

अथात्मज्योतिषि अन्यासु नाडीषु अविकीर्णे, आत्मनाड्यामेव ज्वलति सति किं भवतीत्याह—

आत्मनाड्यां यदा भाति चैतन्यज्योतिरुज्ज्वलम् ॥
केवलायां तदा नान्य दात्मनः सम्प्रभासते ॥१४॥

यदा चैतन्यज्योतिः केवलायामात्मनाड्यां भाति तदा आत्मनोऽन्यन्न संम्प्र-भासते इति योजना । आत्मनाड्यां स्थितौ आत्मनोऽन्यन्न देहादेर्भानं नेत्युक्तम् । किं तर्हि देहादेर्ग्रहणं नास्त्येवात्मविद इति चेदाह ॥

सान्निध्याद्भासमानं वा न पृथक्प्रतितिष्ठति ॥
जानाति स्पष्टमात्मानं स देहमिव पामरः ॥१५॥

सान्निध्यात्सन्निकर्षाद्भासमानं गोचरतां गतं किमपि पृथङ्न प्रतितिष्ठति स्वात्मनो भिन्नतया न प्रतिष्ठितं भवति । जलबुद्बुदवदम्भोधितरङ्गवत् तस्य भानं लयश्च भवतः, पृथक्प्रतिष्ठा नेति यावत् । आत्मनाड्यामवस्थितज्योतिष्कः आत्मवित्पुरुषः आत्मानं स्पष्टं जानाति । यथा पामरोऽनात्मज्ञो देहमात्मानं सर्वेन्द्रियमनोबुद्धिसहितं स्वयं विस्पष्टं जानाति, तथा विस्पष्टमात्मविदात्मानमिति भावः ॥

देहात्मनोर्जडचेतनयोः सम्बन्धो ग्रन्थिः प्रागुक्तः । तत्रात्मपृथक्करणमेव ग्रन्थिभेद उक्तः । इदानीं भिन्नग्रन्थेः पुरुषस्य लोकमधिकृत्य कीदृशी दृष्टि-रित्याह—

आत्मैव भासते यस्य बहिरन्तश्च सर्वतः ॥
पामरस्येव रूपादि स भिन्नग्रन्थिरुच्यते ॥१६॥

यस्य विदुषोऽन्तर्बहिश्च सर्वतः आत्मैव, पामरस्याविदुषो रूपादि इन्द्रियार्थजातमिव भासते, स भिन्नग्रन्थिः भिन्नो विविच्य पृथक्कृतो ग्रन्थिर्जडचेतनसम्बन्धो यस्य स उच्यते । यथाऽज्ञानिनः सर्वत्र जगत्प्रत्यक्षं भवति, तथा ज्ञानिनः सर्वत्र आत्माऽपरोक्षो भवति । न केवलमन्तरेवात्मा, बहिरपि भवति । कुतः? तस्य पूर्णत्वान्नित्यत्वादखण्डत्वाच्च । यद्यपि देहिना स्वरूपान्वेषणे क्रियमाणे शरीरस्थहृदयमुख्यनाड्यामेव ज्योतिरवतिष्ठते, तथाऽपि स्वरूपलाभे बहिरन्तश्च व्याप्य स्थित आत्मेत्यवगम्यते । वस्तुतस्तु साधनापेक्षया आत्मनो देहे स्थानं सिद्धम् । सिद्धौ स्वरूपापेक्षया आत्मनः कालापरिच्छिन्नत्वमिव देशापरिच्छिन्नत्वमपि बोध्यम् ॥

अथ ग्रन्थिं द्विधा प्रतिपादयति—

नाडीबन्धोऽभिमानश्च द्वयं ग्रन्थिरुदीर्यते ॥
नाडीबन्धेन सूक्ष्मोऽपि स्थूलं सर्वं प्रपश्यति ॥१७॥

नाडीबन्धः नाडीष्वात्मेतरनाडीषु बन्धो चैतन्यज्योतिषो रोधो देहात्मसम्बन्धसम्पादक इति यावत्, अभिमानश्च देहे आत्माभिमानश्च एतद्द्वयं ग्रन्थिरुच्यते । एक एव हृदयग्रन्थिस्तस्य देहापेक्षया नाडीबन्धरूपत्वं, जीवापेक्षयाऽभिमानरूपत्वमिति च बोध्यम् । अविद्याग्रन्थयो देहे बहवोऽवस्थिताः । तेषु हृद्ग्रन्थिरेको मुख्योऽविद्याव्यापाराणां मूलभूतो येन चित्प्रकाशोऽन्यासु नाडीषु प्रसरन् आत्मनाड्यां नावतिष्ठते । नाडीबन्धेन अमृतस्वरूपनाडीव्यापाररोधेन, अत एवात्मदृष्टिप्रतिबन्धकेन सूक्ष्मोऽपि द्रष्टा देहात्माभिमानवान् सर्वं स्थूलं जगत्प्रपश्यति ॥

तस्मान्नाडीभ्यो ज्योतिर्निवृत्तिर्ग्रन्थिभेद इत्याह—

निवृत्तं सर्वनाडीभ्यो यदैकां नाडिकां श्रितम् ॥
भिन्नग्रन्थि तदा ज्योति रात्मभावाय कल्पते ॥१८॥

ज्योतिश्चैतन्यज्योतिर्येनाहमस्मीति प्रकाशो भवति तत् देहे सर्वनाडीभ्यः शक्ति-प्रकाशवाहिनीभ्यो निवृत्तं परावृत्तं सत् एकां मुख्यां नाडिकामात्मनाडिकां श्रितमवस्थितं यदा भवति, तदा भिन्नग्रन्थि भिन्नो विघटितो ग्रन्थिर्बन्धो यस्य तत् ज्योतिः आत्म-भावाय कल्पते आत्मस्वरूपेऽवस्थातुं प्रभवति ॥

दृश्यमानं सर्वं आत्मस्वरूपेण भाति ज्ञानिन इति दृष्टान्तेनोदाहरति—

अग्नितप्तमयोगोलं दृश्यतेऽग्निमयं यथा ॥
स्वविचाराग्निसन्तप्तं तथेदं स्वमयं भवेत् ॥१९॥

यथा अयोगोलं गोलाकारं आयसं पिण्डं अग्नितप्तं अग्निना तप्तं ज्वलितं अग्निमयं अग्न्याकारमेव दृश्यते, तथेदं दृश्यमानं समस्तं स्वविचाराग्निसन्तप्तं आत्मविचारज्वलनेन सम्यग्दीप्तं सत् स्वमयमात्ममयं भवेत् ॥

आत्मविचारसिद्धेर्वासनाक्षयमाह—

शरीरादिजुषां पूर्व- वासनानां क्षयस्तदा ॥
कर्तृत्वमशरीरत्वा- न्नैव तस्य भविष्यति ॥२०॥

तदा विचारे फलिते शरीरादिजुषां आदिशब्देन प्राणोऽन्तःकरणं च गृह्येते । शरीरादिगतानां पूर्ववासनानां पूर्वानुभवजन्यस्मृतिहेतुभूतसंस्कारविशेषाणां क्षयः प्रध्वंसः । तस्य सिद्धात्मविचारस्य अशरीरत्वादात्मभावेन तिष्ठतो देहभावासत्त्वात् कर्तृत्वं नैव भविष्यति, सदेहस्यैव कर्तृत्वात् ॥

ज्ञानिनः कर्मक्षयमाह—

कर्तृत्वाभावतः कर्म- विनाशोऽस्य समीरितः ॥
तस्य वस्त्वन्तराभावा- त्संशयानामनुद्भवः ॥२१॥

अस्य विदुषः कर्तृत्वाभावतो हेतोः कर्मविनाशो बन्धकस्य सर्वस्यापि कर्मणो विनष्टिरुक्ता । अथ यदि ज्ञानिनोऽपि कर्म कुर्युः, तदितरबुद्धिगतं, ज्ञानी स्वात्मानं कर्तारं न पश्यति । यदि च कर्म कुर्वन्नेव नाहं करोमीति धीरेव तस्य भवतीति पामरः प्रतीयात्, तत्र न सा केवलं धीरेवेति बोध्यम्, आत्मनोऽकर्तृत्वस्यानुभूतिरूपत्वात् अपरोक्षत्वाच्च । ज्ञानिनि इतरबुद्धौ कर्माणि कुर्वति, तत्र कर्मकरणमेव प्रत्यक्षं भवति, न तु कर्त्रधिष्ठानमकर्त्रात्मस्वरूपम् । अपि च परदृष्टौ ज्ञानिगते कर्तृत्वे, तत्र परेच्छायाः कारकत्वं शरीरादेः कर्तृत्वं च बोध्यं, न तत्र कर्तव्यताधीः सम्भवति सिद्धात्मनिष्ठासम्पन्नस्य । तस्य विदुषो वस्त्वन्तराभावात् आत्मस्वरूपादन्यस्याविद्यमानत्वात्संशयानां सन्देहानामनुद्भवः । "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥"

आत्मदर्शनात्परं न कदाऽप्यनात्मदर्शनं सम्भवतीति प्रतिपादयन्नध्यायमुपसंहरति—

**भविता न पुनर्बद्धो विभिन्नग्रन्थिरेकदा ॥**
**सा स्थितिः परमा शक्तिः सा शान्तिः परमा मता ॥२२॥**

एकदा सकृद्विभिन्नग्रन्थिर्विभिन्नो मुक्तः ग्रन्थिर्बन्धो यस्य स 'पुनर्बद्धो न भविता' पुनर्देहात्मबन्धवान्न भवेत् । सा स्थितिः स्वरूपनिष्ठारूपा परमा शक्तिर्भवति, यस्याः परं न काऽपि वर्तत इत्यर्थः । 'सा शान्तिः परमा मता' यस्याः परं निश्चलत्वलक्षणा पूर्णा स्थितिर्न काऽपि विद्यत इति भावः ॥

अनेनात्मस्वरूपे शान्तिशक्त्योरभेद उपदिष्टः ॥

॥ इति नवमोऽध्यायः ॥

# ॥ दशमोऽध्यायः ॥

अस्मिन् दशमेऽध्याये सङ्घविद्या प्रस्तूयते ॥

**यतिनो योगनाथस्य महर्षिरमणस्य च ॥**
**दशमेऽत्र निबध्नीमः संवादं सङ्घहर्षदम् ॥१॥**

अत्र दशमेऽध्याये योगनाथस्य एतदाख्यस्य यतिनस्तुरीयाश्रमिणो भगवतो महर्षिरमणस्य च उभयोश्च चलितं सङ्घहर्षदं सङ्घस्य हितोपदेशकत्वात् हर्षदं संवादं निबध्नीमो विरचयामः ॥

योगनाथ उवाच–

**साङ्घिकस्य च सङ्घस्य कः सम्बन्धो महामुने ॥**
**सङ्घस्य श्रेयसे नाथ तमेतं वक्तुमर्हसि ॥२॥**

महामुने! सङ्घस्य साङ्घिकस्य सङ्घस्यायं साङ्घिकस्तस्य, उभयोश्च सम्बन्धः कः किंस्वरूप इति प्रश्नः । नाथ! भगवन्! सङ्घस्य श्रेयसे सङ्घक्षेमायेत्यर्थः, तमेतमर्थं वक्तुमर्हसीति प्रार्थना । सिद्धानां महापुरुषाणां वचसो वीर्यवत्त्वात् प्रामाण्याच्च, सङ्घमधिकृत्य भगवन्महर्षेर्वदनाब्जनिःसृतं वचनं सङ्घोपकारकं भवेदिति मयेदं पृच्छ्यते, न तु भगवान्महर्षिर्विधुतसङ्गः सङ्घमधिकृत्य किमभिप्रैतीति कौतुकावेशेनेति प्रष्टुर्भावः ॥

भगवानुवाच—

**ज्ञेयः शरीरवत्सङ्घ- स्तत्तदाचारशालिनाम् ॥**
**अङ्गानीवात्र विज्ञेयाः साङ्घिकाः साधुसत्तम ॥३॥**

साधुसत्तम! सज्जनश्रेष्ठ! तत्तदाचारशालिनां देशभेदेन कालभेदेन च तैस्तैराचारैः श्रेयःप्रदत्वेन गृह्यमाणैरनुष्ठानैः शालन्ते शोभन्त इति तत्तदाचारशालिनः सम्प्र-

दायानभिमान्य ये कुर्वन्ति तेषां पुरुषाणां संघः समुदायः शरीरवद्भवति । अत्र विषये सांघिकाः संघस्थाः अङ्गानीव विज्ञेयाः बोध्याः । संघः समष्टिः सांघिको व्यष्टिः । उभयोरङ्गाङ्गिभावे प्रतिपाद्यमाने संवादताचाराणां व्यष्टिसमष्ट्यङ्गाङ्गिभावसम्पादकत्वमुक्तं भवति ॥

अथ सांघिकस्योत्कर्षं उपपादयति—

अङ्गं यथा शरीरस्य करोत्युपकृतिं यते ॥
तथोपकारं सङ्घस्य कुर्वन् जयति साङ्घिकः ॥४॥

यते योगनाथ! यथा शरीरस्याङ्गं करचरणादि उपकृतिं करोति, तथा संघस्य शरीरस्थानीयस्य सांघिकोऽङ्गस्थानीयः उपकारं कुर्वन् जयति उत्कर्षेण वर्तते । संघस्य सांघिकसमुदायरूपत्वात् सांघिकसदाचरणायत्तं संघक्षेमं, समीचीनाचरणेन सांघिकस्य उत्कर्षः ॥

संघस्योपकारः कथं साधनीय इत्याह—

सङ्घस्य वाङ्मनःकायै रुपकारो यथा भवेत् ॥
स्वयं तथाऽऽचरन्नित्यं स्वकीयानपि बोधयेत् ॥५॥

यथा येन प्रकारेण वाङ्मनःकायैः वाचा मनसा शरीरेण च संघस्योपकारो भवेत्, तथा स्वयं सांघिक आचरन्ननुतिष्ठन् स्वकीयान् स्वसम्बन्धिनोऽपि बोधयेत् तथाऽनुष्ठातुमिति भावः । स्वयमाचरणेन बोधनं न केवलं प्रवचनेन । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥"

संघक्षेमसम्पादनक्रममाह—

आनुकूल्येन सङ्घस्य स्थापयित्वा निजं कुलम् ॥
सङ्घस्यैव ततो भूत्यै कुर्याद्भूतियुतं कुलम् ॥६॥

'संघस्यानुकूल्येन निजं कुलं स्थापयित्वा' यथा निजं कुलं संघानुकूलमाचरेत्तथा तद्विधाय, ततोऽनन्तरं संघस्यैव भूत्यै सम्पदे कुलं स्वीयं भूतियुतं कुर्यात् । नेह स्वार्थ-परता । संघमेवोपकुर्यात्सम्पन्नं निजं कुलम् ॥

योगनाथ उवाच—

शान्तिं केचित्प्रशंसन्ति शक्तिं केचिन्मनीषिणः ॥
अनयोः को गुणो ज्यायान् सङ्घक्षेमकृते विभो ॥७॥

स्पष्टम् ॥ संघक्षेमापेक्षया किं शान्तेरधिकं प्रयोजनमुत शक्तेरिति प्रश्नः ॥

भगवानुवाच—

स्वमनःशुद्धये शान्तिः शक्तिः सङ्घस्य वृद्धये ॥
शक्त्या सङ्घं विधायोच्चैः शान्तिं संस्थापयेत्ततः ॥८॥

स्वमनःशुद्धये स्वस्य सांघिकस्य मनसोऽन्तःकरणस्य शुद्धये शान्तिः, निरहङ्कार-सम्पत्तिरूपशुद्धिप्रयोजना शान्तिः प्रशंसनीयेत्यर्थः । 'शक्तिः संघस्य वृद्धये' संघाभि-वृद्धये शक्तिरेव प्रथममपेक्ष्यते । अत आह— शक्त्या संघं उच्चैर्विधाय ततः शान्तिं संस्थापयेत्' इति । यद्यपि पशुबलादात्मबलं गरीयः, शक्तेरपि शान्तेरेव प्रतिष्ठा भवति, तथाऽपि सांघिकस्येव संघस्यापि आत्मशक्तिः शान्तिर्वा क्रमेणैव सम्पादनीया भवति । यद्यपि कदाचित् पुरुषविशेषस्य सहसा स्वात्मलाभः सम्पद्यते, तथाऽपि प्रायशः सर्वेऽपि सोपानक्रममेवापेक्षन्ते । एवं स्थिते संघस्य प्रथमं जीवनधारणार्था शक्तिरावश्यकी, तदनन्तरमेव शान्तेरधिकार इति श्रीमहर्षेः प्रत्युत्तरादवगम्यते । यथा देहधारणासमर्थस्य व्याधितस्य वा सर्वथा तात्कालिकदौर्बल्याद्वाऽऽत्मविचारप्रारम्भो नोपपद्यते, बलवत एव शक्यो भवति, तथा दुर्बलस्य संघस्य प्रथमं शक्तिसम्पत्तेरेवाधि-कारः शान्तिसमृद्धेः सम्पद्यते नान्यथेति सुगमम् । "नायमात्मा बलहीनेन लभ्यः ।' तस्मात् संघस्यापि बलं प्रथमं सोपानम् ॥

योगनाथ उवाच—

सर्वस्यापि च सङ्घस्य नराणामृषिकुञ्जर ॥
गन्तव्यं समुदायेन किं परं धरणीतले ॥९॥

ऋषिकुञ्जर! सर्वस्यापि नराणां संघस्य सकलमानुष्यकस्येति यावत् समुदायेन गन्तव्यं परं लक्ष्यं धरणीतले किम्? मनुष्याः प्रत्येकं आत्मस्वरूपावगतये यतेरन्निति निर्विवादम् । सर्वेऽपि मानवाः संघीभूयेह भूमण्डले किं लक्ष्यं प्राप्तुं प्रयतेरन्निति प्रश्नः ॥

भगवानुवाच—

समुदायेन सर्वस्य सङ्घस्य तनुधारिणाम् ॥
सौभ्रात्रं समभावेन गन्तव्यं परमुच्यते ॥१०॥

सर्वस्य समस्तस्य तनुधारिणां संघस्य समभावेन सौभ्रात्रं शोभनो भ्रातृभावः इत्यर्थः, तदेव परमुत्तमं लक्ष्यं गन्तव्यं प्राप्तव्यं, न प्रत्येकं, समुदायेनेत्याह । सर्वेऽपि संघीभूय समत्वदृष्ट्या शुभदं सहोदरभावं प्राप्नुयुः ॥

सौभ्रात्रेण परा शान्ति- रन्योन्यं देहधारिणाम् ॥
तदेयं शोभते सर्वा भूमिरेकं गृहं यथा ॥११॥

देहधारिणां मनुष्याणां अन्योन्यं परस्परं सौभ्रात्रेण समत्वलक्षणेन सिद्धेन सहोदरभावेन परा शान्तिरत्युत्तमा शान्तिः सामरस्यसमृद्धा भवति । तदेयं सर्वा भूमिरेकं गृहं यथा, तथा शोभते । सर्वं भूमण्डलं मानुष्यककुटुम्बस्यैकमावासगृहमिव शोभते ॥

प्रायशः सर्वेषां मानुषाणां आत्मस्वरूपदृष्टौ सिद्धायामेवेदृशी स्थितिः संघस्य सम्भवेत् । तस्मादेकैकोऽपि पुरुषः समत्वसौभ्रात्रसम्पत्त्यनुकूलमाचरेल्लोकव्यवहारे । तादृशमाचरणं आत्मविचारप्रवृत्तानां साधनांशः स्यात् ॥

अभूत्पञ्चदशे घस्रे संवादः सोऽयमष्टमे ॥
योगनाथस्य यतिनो महर्षेश्च दयावतः ॥१२॥

अष्टमे आगस्ट् मासि पञ्चदशेऽहनि (१९१६–८–१५) सोऽयं संवादः दयावतो महर्षेर्यतिनो योगनाथस्य चाभूत् । नैष्ठिकाणामाचार्यो निरस्तसकलजगज्जीवादिसङ्गोऽपि भगवान्महर्षिर्दयावत्त्वादेव संघमधिकृत्य तदनुकूलां वाचमवोचत् ॥

॥ इति दशमोऽध्यायः ॥

## ॥ एकादशोऽध्यायः ॥

अथ ज्ञानसिद्धिसामरस्यप्रतिपादकोऽयमध्यायः प्रारभ्यते—

षोडशे दिवसे रात्रौ विविक्ते मुनिसत्तमम् ॥
गुरुं ब्रह्मविदां श्रेष्ठं नित्यमात्मनि संस्थितम् ॥१॥

उपगम्य महाभागं सोऽहं कैतवमानवम् ॥
रमणं स्तुतवानस्मि दुर्लभज्ञानलब्धये ॥२॥

प्रागुक्त एवाब्दे मासि च षोडशे दिवसे (१९१६–८–१६) विविक्ते विजने मुनिसत्तमं ऋषिश्रेष्ठं गुरुं ममाचार्यं ब्रह्मविदां ब्रह्मज्ञानिनां श्रेष्ठं नित्यं अविच्छेदेनात्मनि स्वरूपे संस्थितं महाभागं महनीयभागधेयं कैतवमानवं वेषेण मानुषम् । वस्तुतो नायं मानव इति भावः । स्कन्दावतार इति ह्याचार्यस्य ग्रन्थकृतो दर्शनम् । रमणं एतन्नाम्ना प्रसिद्धं, सोऽहं महर्षेः सन्निधौ प्रश्नरूपसंशयविज्ञापने लब्धप्रवेशोऽहं दुर्लभज्ञानसिद्ध्ये स्तुतवानस्मि ॥

अथ द्वादशभिः श्लोकैः स्वगुरुं ग्रन्थकृत् स्तौति–

त्वय्येव परमा निष्ठा त्वय्येव विशदा मतिः ॥
अम्भसामिव वाराशि- र्विज्ञानानां त्वमास्पदम् ॥३॥

त्वय्येव परमा उत्तमा निष्ठा निश्चला स्थितिः । तथा विशदा निर्मला मति-र्निस्सङ्गत्वाच्छुद्धा बुद्धिः । अम्भसां वाराशिः वारां राशिः सागर इव त्वं विज्ञानाना-मास्पदं स्थानं भवसि ॥

त्वं तु सप्तदशे वर्षे बाल्य एव महायशः ॥
लब्धवानसि विज्ञानं योगिनामपि दुर्लभम् ॥४॥

बाल्य एव महायशः! पृथुलकीर्ते भगवन्! त्वं सप्तदशे वर्षे षोडशे पूर्णे सप्तदशे प्रचलति, योगिनामपि दुर्लभं बहुसंवत्सरनिर्वर्त्ययोगसाधनसम्पन्नानामपि दुष्प्रापं विज्ञानं आत्मस्वरूपज्ञानं लब्धवानसि । अत एव बाल्य एवायं ज्ञानवानभूदिति पृथुलं यशः समपद्यत ॥

सर्वे दृश्या इमे भावा यस्य च्छायामयास्तव ॥
तस्य ते भगवन्निष्ठां को नु वर्णयितुं क्षमः ॥५॥

भगवन्! यस्य तव सर्वे इमे पुरः स्थिता दृश्या भावाः पदार्थाः छायामयाः छायामात्रत्वेन, न तु वस्तुतयाऽवस्थिताः, तस्य ते निष्ठां को नु वर्णयितुं क्षमः? न कोऽपि प्रभुर्वक्तुमित्यर्थः ॥

मज्जतां घोरसंसारे व्यापृतानामितस्ततः ॥
दुःखं महत्तितीर्षूणां त्वमेका परमा गतिः ॥६॥

घोरसंसारे घोरे भयङ्करे संसारे जननमरणात्मके मज्जतां गाढं प्रविष्टानां इत-स्ततः सर्वतोऽवशतो व्यापृतानां चलतां जनानां महद्दुःखं तितीर्षूणां त्वमेका परमा गतिः, शरण्योऽसि तान्प्रति तवोद्धारकतासम्पत्तेः ॥

पश्यामि देवदत्तेन ज्ञानेन त्वां मुहुर्मुहुः ॥
ब्रह्मण्यानां वरं ब्रह्मन् सुब्रह्मण्यं नराकृतिम् ॥७॥

ब्रह्मन् ब्रह्मस्वरूपिन्! त्वां ब्रह्मण्यानां ब्रह्मज्ञानवतां वरं श्रेष्ठं सुब्रह्मण्यं स्कन्दं नराकृतिं मानवाकारतयाऽवस्थितं पश्यामि । एवं दर्शनस्य किं साधनम्? आह । देवदत्तेन ज्ञानेन ईश्वरानुगृहीतदिव्यचक्षुषेति भावः ॥

न त्वं स्वामिगिरौ नाथ न त्वं क्षणिकपर्वते ॥
न त्वं वेङ्कटशैलाग्रे शोणाद्रावसि वस्तुतः ॥८॥

स्वामिगिरिश्चोलमण्डलस्थः । क्षणिकपर्वतः शान्तिगिर्यपरनामकः काञ्चीमण्डलस्थः 'तिरुत्तणिकै' इति भाषायां प्रसिद्धः । वेङ्कटशैलो द्राविडानामुत्तरा सीमा । एषु क्षेत्रेषु यो देवः सुब्रह्मण्यो भक्तानुग्रहार्थमाविर्भूत आराध्यते सोऽस्माकं न विदितो न प्रत्यक्षः । इह तु स एव त्वमधुना नराकारोऽरुणाचलेऽस्माकं प्रत्यक्षो विजयस इति भावः ॥

भूमविद्यां पुरा नाथ नारदाय महर्षये ॥
भवान् शुश्रूषमाणाय रहस्यामुपदिष्टवान् ॥९॥

छान्दोग्यश्रुतिप्रतिपादिता भूमविद्या शुद्धाकाशविद्या । तां रहस्यां विद्यां नारदाय सनत्कुमार उपदिदेशेति नारदसनत्कुमाराख्यायिका भवति । तत्र स्कन्द एव सनत्कुमार इत्युक्तम् । "तमसः पारं दर्शयति भगवान् सनत्कुमारः तं स्कन्द इत्याचक्षते" इति ॥

सनत्कुमारं ब्रह्मर्षिं त्वामाहुर्वेदवेदिनः ॥
आगमानां तु वेत्तारः सुब्रह्मण्यं सुरर्षभम् ॥१०॥

सनत्कुमार एव स्कन्द इति वेदविदभिमतम् । तस्मात् स्कन्दस्त्वमेव सनत्कुमार इति स्तौति ॥

केवलं नामभेदोऽयं व्यक्तिभेदो न विद्यते ॥
सनत्कुमारः स्कन्दश्च पर्यायौ तव तत्त्वतः ॥११॥

स्कन्दसनत्कुमारयोरेकव्यक्तिपरत्वादुभयमपि तवैव नाम ॥

पुरा कुमारिलो नाम भूत्वा ब्राह्मणसत्तमः ॥
धर्मं वेदोदितं नाथ त्वं संस्थापितवानसि ॥१२॥

वेदबाह्यसमयिभिः सौगतैराकुले काले सुब्रह्मण्यांशसञ्जातः कुमारिलभट्टो ब्राह्मणो वैदिकधर्मं स्थापयामास । कुमारिलस्य यः कारणपुरुषः स्कन्दः स एव त्वं, तवापि तद्रूपान्तरभूतत्वात् ॥

जैनैर्व्याकुलिते धर्मे भगवन् द्रविडेषु च ॥
भूत्वा त्वं ज्ञानसम्बन्धो भक्तिं स्थापितवानसि ॥१३॥

जैनैर्वैदिके धर्मे व्याकुलिते स्कन्दांशसञ्जातः श्रीज्ञानसम्बन्धमूर्तिः शैवसमयाचार्योऽवतीर्य भक्तिं स्थापितवान् । इममधिकृत्यैव सौन्दर्यलहर्यां 'तव स्तन्यं मन्ये' इति पद्ये 'दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत् कवीनां प्रौढानामजनि कमनीयः कवयिता' इत्युल्लिखितम् ॥

अधुना त्वं महाभाग ब्रह्मज्ञानस्य गुप्तये ॥
शास्त्रज्ञानेन सन्तृप्तै- र्निरुद्धस्यागतो धराम् ॥१४॥

एवं भक्तिस्थापनाय श्रीज्ञानसम्बन्धमूर्तिरूपेणागतस्त्वं, महाभाग! अधुना शास्त्रज्ञानेन सन्तृप्तैः शास्त्रचर्चैवालमिति आत्मविचारात्तस्यानन्यत्वं मत्वा भ्रमतस्तृप्तैः पुरुषैः निरुद्धस्य प्रतिबद्धप्रसारस्य ब्रह्मज्ञानस्य गुप्तये रक्षणायेत्यर्थः, धरामागतः भुवं प्राप्तः ॥

सन्देहा बहवो नाथ शिष्याणां वारितास्त्वया ॥
इमं च मम सन्देहं निवारयितुमर्हसि ॥१५॥

नाथ! बहवः शिष्याणां सन्देहास्त्वया वारिताः निवारिताः । इमं वक्ष्यमाणं मम च सन्देहं निवारयितुमर्हसि, निवार्य मामनुगृहाणेति विज्ञप्तिः ॥

अथायं प्रश्नो भवति—

ज्ञानस्य चापि सिद्धीनां विरोधः किं परस्परम् ॥
उताहो कोऽपि सम्बन्धो वर्तते मुनिकुञ्जर ॥१६॥

मुनिकुञ्जर! ऋषिश्रेष्ठ! ज्ञानस्यात्मस्वरूपज्ञानस्य सिद्धीनामणिमाद्यष्टसिद्धीनां अद्भुतशक्तिविशेषाणां वा परस्परमन्योन्यं विरोधः किम्? उताहो अथवा कोऽपि सम्बन्धो वर्तते? सिद्धीनां ज्ञानप्रतिबन्धकत्वं राजयोगिष्वपि प्रसिद्धम्, किमुत ज्ञानमार्गिषु यैरात्मनोऽन्यस्य न कस्यापि लाभ इष्यते, अत एवायं सन्देहः ॥

मयैवं भगवान् पृष्टो रमणो नुतिपूर्वकम् ॥
गभीरया दृशा वीक्ष्य मामिदं वाक्यमब्रवीत् ॥१७॥

नुतिपूर्वकं स्तोत्रपुरःसरं मयैवं पृष्टो भगवान् रमणो गभीरयाऽगाधया दृशा दृष्ट्या वीक्ष्य वक्तव्यं प्रत्युत्तरं ज्ञानसिद्धिसम्बन्धविषयकं रहस्यं दृष्ट्वा मामिदं वक्ष्यमाणमब्रवीत् । दृशा वीक्ष्य, न तु बुद्ध्याऽऽलोच्येति बोध्यम् ॥

अथ नवभिः श्लोकैर्भगवतः प्रतिवचनं भवति ॥

सहजां स्थितिमारूढः स्वभावेन दिने दिने ॥
तपश्चरति दुर्धर्षं नालस्यं सहजस्थितौ ॥१८॥

'सहजां स्थितिमारूढः' सहजात्मनिष्ठासम्पन्नः सिद्धः पुरुषः दिने दिने स्वभावेनायत्नतः स्वरूपे वर्तनं सहजं हि ज्ञानसिद्धस्य । 'दुर्धर्षं तपश्चरति' न केनापि निमित्तेन विचाल्यं तपश्चरति अनुतिष्ठति । सकृद्भिन्ने हृदयग्रन्थौ, उदिते स्वरूपज्ञाने, ततः परं लब्धात्मस्वरूपस्य न किमप्यस्ति कर्तव्यं प्राप्यं वा । सोऽचलस्तिष्ठतीति ज्ञानसिद्धमधिकृत्य बहूनि विज्ञवचनानि बहूनि च श्रुतिस्मृतिपुराणेतिहासवाक्यानि चोद्घोषयन्ति । तत्कथमिह ज्ञानप्राप्तेरनन्तरमपि तपश्चरतीत्युच्यते? तपश्चरणं तस्य स्वभाव इत्याह । यथा वायुर्वाति, ज्वलनो ज्वलति, तपनस्तपति, प्राणिनः प्राणन्ति तथा ज्ञानिनस्तपः स्वभावतः प्रवर्तते । न तन्नैमित्तिकं, अत एव दुर्धर्षमिति विशेषणोपादानम् । किं तद्दुर्धर्षं तपः? सहजात्मनिष्ठेत्युत्तरत्र वक्ष्यति । अस्तु नामेदृशं ज्ञानिनस्तपोऽयत्नसिद्धम् । कीदृशी पुनः सा सहजा स्थितिर्यत्र ज्ञानिनाऽचलेन स्थीयते? किं वा तदचलत्वं यत्पाषाणादौ जडे वस्तुनि दृश्यते तदेव सहजस्थितावपि स्यादिति चेन्नेत्याह— 'नालस्यं सहजस्थितौ' तत्र न विद्यते आलस्यं मान्द्यं जडत्वलक्षणमिति यावत् । किं च जडस्य स्वतश्चलनेऽसत्यपि अस्त्येव नैमित्तिकं चलनं, अचलप्रतिष्ठायां सहजस्थितौ न कुतोऽप्यवकाशश्चलनस्य । नालस्यमित्यनेन सहजा जागरूकता स्वात्मनिष्ठायामविच्छिन्नेति बोध्यम् ॥

अस्तु सहजायां स्थितौ नित्यो बोधः, तस्याचलत्वान्निष्क्रियत्वे सिद्धे, न तेन कस्यापि कार्यस्य कारणत्वेनावस्थातुं शक्यत इति चेदाह—

**तपस्तदेव दुर्धर्षं या निष्ठा सहजाऽऽत्मनि ॥**
**तेन नित्येन तपसा भवेत्पाकः क्षणे क्षणे ॥१९॥**

या आत्मनि स्वरूपे सहजा स्वभावसिद्धा निष्ठा दृढा स्थितिः तदेव दुर्धर्षं तपः । तेनोक्तलक्षणेन नित्येनाकृतकेन तपसा क्षणे क्षणे पाकः परिपाको भवेत् । लब्धात्मस्वरूपस्य ज्ञानिनः कार्यस्यासत्त्वे प्रतिपादिते, कथमयं तस्य परिपाकः सम्भवति? नेह ज्ञानिकार्यत्वेन परिपाक उक्तः, किं तु तपःकार्यत्वेन । तपनादिस्वभावतस्तापप्रकाशादिरिव तपःस्वभावतः परिपाकः प्रवर्तते । न च तपसः स्वरूपं परिपाक इत्युक्तम्, तस्य सहजात्मनिष्ठात्वोक्तेः । न चात्मस्वरूपस्य तन्निष्ठायाश्च परिपाकः शक्यते वदितुं, स्वरूपस्य

पूर्णतया पाकानवकाशात्, निष्ठायाः सिद्धतया कार्यताहानेश्च । तस्मात् कस्यापि परिपाकः स्याद्यस्मिन् परिपाकः सम्भवति । स कः ? उच्यते । सहजात्मनिष्ठं पुरुषमाश्रित्य व्याप्रियमाणस्य मनःप्राणशरीरात्मकस्य चित्क्रियाव्यापाराश्रयस्य उपाधिशब्दवाच्यस्य वा स्थूलसूक्ष्मादिभेदवद्देहस्यैव परिपाकः सहजे तपसि स्थितस्य महापुरुषस्य स्वभावतोऽनवरतं प्रचलन्नेव जयतीति बोध्यम् ॥

किं ततः पाकेनेति शङ्कायामाह—

**परिपाकेन काले स्युः सिद्धयस्तात पश्यतः ॥**
**प्रारब्धं यदि ताभिः स्याद् विहारो ज्ञानिनोऽपि च ॥२०॥**

तात ! सौम्य ! प्रष्टारं प्रति प्रियवचनेन सम्बोधनम् । पश्यतः स्वरूपमेव सर्वत्र पश्यतो ज्ञानिनः पुरुषस्य तपःप्रभावान्निष्पन्नेन परिपाकेन काले सिद्धयः स्युः । यत्र ज्ञानी पश्यन् तिष्ठति । तस्यात्मस्वरूपस्य देशकालानवच्छिन्नत्वेऽपि तदाश्रितदेहप्राणमनसां देशकालपरिच्छिन्नानां काले सिद्धयः स्युरद्भुतशक्तिरूपिण्यो भवेयुरिति भावः ॥

कालेन परिपाकवशात्तादृशीः प्राप्यापि आत्मवित् ताः प्रकटयेदिति नास्ति नियमः । अत एवाह । प्रारब्धं यदि स्यात्ताभिः सिद्धिभिर्ज्ञानिनोऽपि विहारः स्यात् ॥

ज्ञानोदये सर्वकर्मविनाशश्रवणे सति कथं ज्ञानिनः प्रारब्धमिहोच्यते ? अत्रैके समादधते, "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति । एवं ब्रुवाणाः ज्ञानाद्वासनात्मकसञ्चितकर्मणः प्रध्वंसे तथा आगामिकर्मणश्च प्रणाशे न कोऽपि संशयः, प्रारब्धं तु भोक्तव्यमेवेत्याहुः । तेषामयमाशयः । विदेहकैवल्य एव लयसम्भवः । प्राक्तत्प्राप्तेर्जीवन्मुक्तौ सत्त्वशेषस्य विद्यमानत्वात् प्रारब्धादेव स भवति । तस्मात् सस्थूलविग्रहस्येह स्थितस्योत्क्रान्तस्य वा ससूक्ष्मशरीरस्य ज्ञानिनो भोक्तव्यमेव प्रारब्धं कर्मेति ॥

भगवान्महर्षिस्तु मुक्तेरेकरूपत्वमुपदिशति । अहंधियो विनष्टिरेव परमार्थमुक्तिरिति सद्दर्शने च प्रतिपादितम् । 'मुक्तिरेकविधैव स्यात्' इत्युत्तरत्र च वक्ष्यति । मुक्तिभेदव्यवहारे नादरो दृश्यते श्रीमहर्षेरुपदेशेषु । यथा मुक्तिभेदः परबुद्धिगो न ज्ञानिदृष्टौ

भवति, तथा ज्ञानिनः सिद्धिभिर्विहारः प्रारब्धमिति परबुद्धिगता दृष्टिः, न च निरतिशयात्मस्वरूपावस्थितस्य ज्ञानिनः सिद्धिषु सातिशया बुद्धिः । न वेदृश्यो ज्ञानसिद्धयो मन्त्रौषधितपःसमाधिजा इव पुरुषकारसाधिता भवन्ति, आसां ज्ञानस्वभावत उद्भवात् ॥

तथा चाहुर्ज्ञानयोगिनः—

द्विविधाः सिद्धयो लोके कल्पिताकल्पितास्तथा
रसौषधिक्रियाजालमन्त्राभ्यासादिसाधनात्
सिद्ध्यन्ति सिद्धयो यास्तु कल्पितास्ताः प्रकीर्तिताः
अनित्या अल्पवीर्यास्ताः सिद्धयः साधनोद्भवाः
साधनेन विनाऽप्येवं जायन्ते स्वत एव हि
स्वात्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियाः
प्रभूताः सिद्धयो यास्ताः कल्पनारहिताः स्मृताः
सिद्धा नित्या महावीर्या इच्छारूपाः स्वयोगजाः
चिरकालात्प्रजायन्ते वासनारहितेषु च

(— योगशिखोपनिषत् श्लो. १५१–१५५)

तस्मात्तपःस्वभावजा इमाः सिद्धय इति बोध्यम् । तासु सिद्धिषु ज्ञानिनो न भ्रमः, स्वरूपबुद्धिरेवेत्याह—

**यथा प्रपञ्चग्रहणे स्वरूपान्नेतरन्मुनेः ॥**
**सिद्धयः क्रियमाणाश्च स्वरूपान्नेतरत्तथा ॥२१॥**

यथा प्रपञ्चग्रहणे पुरोऽवस्थितस्य विषयस्य ज्ञाने, मुनेर्ज्ञानिनः स्वरूपादन्यन्न आत्मस्वरूपादनन्यत्वेन यथा ज्ञानी विषयान्गृह्णाति, तथा तस्य स्वरूपादनन्या एव क्रियमाणाः सिद्धयः । सिद्धिबाहुल्ये सत्यपि ज्ञानी न चेष्टते । कुतः? आह—

**भवेन्न यस्य प्रारब्धं शक्तिपूर्णोऽप्ययं मुनिः ॥**
**अतरङ्ग इवाम्भोधि- र्न किञ्चिदपि चेष्टते ॥२२॥**

यस्य मुनेः प्रारब्धं न भवेत्, अयं स मुनिः शक्तिपूर्णोऽपि अतरङ्गः अविद्यमान-वीचिः अम्भोधिः सागर इव किञ्चिदपि न चेष्टते । प्रारब्धमधिकृत्य प्राग्व्याख्यातम् । यद्यचेष्टमानो वर्तते ज्ञानी, तन्नाशक्तेः । अत एव शक्तिपूर्णोऽपीत्याह । ज्ञानं न कदाऽपि निःशक्ति भवति, किंतु शक्तौ सत्यां चेष्टा स्यादिति न नियमः । अखण्डत्व-गम्भीरत्वद्योतनाय सागरेणोपमा । अतरङ्गत्वं निश्चेष्टत्वाय ॥

आत्मैवाधिकरणं सर्वासां शक्तीनामित्याह ॥

नान्यं मृगयते मार्गं निसर्गादात्मनि स्थितः ॥
सर्वासामपि शक्तीनां समष्टिः स्वात्मनि स्थितिः ॥२३॥

"निसर्गादात्मनि स्थितः" स्वभावात् स्वरूपेऽवस्थितः सहजात्मनिष्ठ इति यावत् अन्यं मार्गं आत्मनोऽन्यमुपायं कस्मैचिदपि प्राप्तव्याय न मृगयते नान्विच्छति । कुतः? स्वात्मनि स्थितिः स्थिरा निष्ठा सर्वासां शक्तीनां अद्भुतसिद्धिवाच्यानां समष्टिः समासः सङ्ग्रह इति यावत् । परमं प्राप्तव्यमर्थं ब्रह्मात्मस्वरूपं लब्धवतो महतः सिद्धस्य प्राप्तव्या-न्तरस्यासत्त्वात् सर्वासामर्थसाधिकानां शक्तीनां आत्मस्वरूपज्ञानाधिकरणत्वाच्च, ज्ञानिनो मार्गान्तरमार्गणं न सम्भवति ॥

उक्तमर्थं द्रढयति—

अप्रयत्नेन तु तपः सहजा स्थितिरुच्यते ॥
सहजायां स्थितौ पाका-च्छक्तीनामुद्भवो मतः ॥२४॥

'अप्रयत्नेन तु तपः' प्रयत्नवर्जं प्रवर्तमानं तपः सहजा स्थितिरुच्यते । सहजायां स्थितौ सिद्धायां सहजस्थितौ क्षणे क्षणे परिपाके प्रचलति, 'शक्तीनामुद्भवो मतः' विविधाः शक्तयो विजृम्भन्त इत्यर्थः ॥

अथ सिद्धस्य तपश्चर्या, देशकालनिरपेक्षेत्याह—

परीवृतोऽपि बहुभि- र्नित्यमात्मनि संस्थितः ॥
घोरं तपश्चरत्येव न तस्यैकान्तकामिता ॥२५॥

नित्यमविरतं आत्मनि संस्थितः सिद्धात्मनिष्ठो बहुभिः परीवृतोऽपि घोरं तपश्चरत्येव । परबुद्धिगतसन्देहसम्भवनिरासार्थ एवकारः । साधनदशायां देशकालादिनियमसापेक्षं तपः । सिद्धौ तु न तथा । प्रयत्ने क्रियमाणे हि नियमा अपेक्ष्यन्ते विघ्ननिराकरणाय । ज्ञानिनस्तपोऽस्मदादीनां निःश्वसितोच्छ्वसितात्मकं प्राणनमिव सहजमनिवार्यं च भवति । तपसो विशेषणं घोरं भयङ्करम् । साहङ्कारस्य बहिर्मुखस्य जनस्याहङ्कारग्रासकं तपोभीतिजनकमिति नेदमाश्चर्यम् । अहङ्कारस्य स्वप्रणाशे सहजा हि भीतिः । तस्माद्यदहङ्कारिणां घोरं तत् सहजमेव भवति तादृशो महापुरुषस्य । केन वा तस्य स्थितिर्बोद्धुं शक्यते? "अहङ्कृतिं यो लसति ग्रसित्वा........तस्य स्थितिं भावयितुं क्षमः कः ॥" एवं सिद्धं तपश्चरतो मुनेः कुतो विजनवासाभिलाषः? तदाह— तस्य मुनेः 'एकान्तकामिता न' एकान्ते विजने कामः सोऽस्येति एकान्तकामी तस्य भावः एकान्तकामिता न भवतीति भावः ॥

अथाध्यायमुपसंहरति—

ज्ञानं शक्तेरपेतं यो मन्यते नैव वेद सः ॥
सर्वशक्तेऽभितः पूर्णे स्वस्वरूपे हि बोधवान् ॥२६॥

यो ज्ञानमपरोक्षानुभवरूपं शक्तेरपेतं अपगतं पृथक्तया वर्तमानं मन्यत इति यावत्, "स नैव वेद" सोऽविद्वानेव न संशयः । अम्भोधितरङ्गयोरिव ज्ञानशक्त्योरवियोज्यत्वात् एकस्वरूपत्वाच्च । अग्नेरुष्णतां कः पृथक्कुर्यात् पूष्णः प्रभां वा? सर्वशक्ते सर्वस्मिन् शक्ते शक्तियुते अभितः सर्वतः पूर्णे स्वस्वरूपे ब्रह्मात्मनि बोधवान् हि ज्ञानी, न तु शक्तिशून्ये वस्तुनि न वा देहाभिमानिनि शारीरे वा पुरुषव्यक्तिविशेषे । पुरुषव्यक्तिविशेषस्यापि स्वस्वरूपविचारसिद्धौ अखण्डात्मस्वरूपलाभात् ॥

॥ इति एकादशोऽध्यायः ॥

# ॥ द्वादशोऽध्यायः ॥

अस्मिन्नध्याये प्राधान्येन शक्तिविचारः क्रियते ॥

एकोनविंशे दिवसे भारद्वाजो महामनाः ॥
कपाली कृतिषु ज्याया- नपृच्छद्रमणं गुरुम् ॥१॥

प्रागुक्त एवाब्दे मासि च एकोनविंशे दिवसे (१९१७–८–१९) भारद्वाजो भरद्वाजसगोत्रः कपाली ग्रन्थकृतोऽन्तेवासी रमणं महर्षिमपृच्छत् पृष्टवान् वक्ष्यमाणमिति शेषः । गुरुं रमणं महर्षिर्गुरूणामपि गुरुरिति प्रसिद्धेर्गुरुपदमुपात्तम् । प्रष्टुः कपालिनः कृतिषु ज्यायस्त्वं महामनस्त्वं चोक्ते । विद्वत्सु अभिज्ञेषु वा गरीयस्त्वं, तथा महामनस्त्वं च कपालिनः स्वशिष्यस्य ब्रवीति ग्रन्थकृदाचार्यो वात्सल्यवशादनुग्रहदृष्ट्या । अस्पष्टे गुणे अल्पे वा सति गुणाविष्कारकेण गुणोपबृंहणेन वा प्रसादगर्भितेन वचसा वर्णनं प्रायेणास्मदाचार्यस्य शैली । यद्यद्यापि पाण्डित्यगन्धो महामनस्त्वलेशो वा कपालिनि लक्ष्येत, स भगवतो वासिष्ठस्य गणपतिमुनेराचार्यस्य तेजोविशेषविलास एवेति अनुभवसनाथा कपालिनो मनीषा ॥

कपाल्युवाच—

विषयी विषयो वृत्ति- रितीदं भगवँस्त्रिकम् ॥
ज्ञानिनां पामराणां च लोकयात्रासु दृश्यते ॥२॥

भगवन्महर्षे ! विषयी ज्ञाताऽस्मत्प्रत्ययगोचरो, विषयो ज्ञेयः इदम्प्रत्ययाश्रय इन्द्रियार्थः, वृत्तिविषयविषयिणोः सम्बन्धो ज्ञानमिति इदं ज्ञातृ-ज्ञेय-ज्ञानात्मकं त्रिकं त्रिपुटीपदवाच्यं लोकयात्रासु लौकिकेषु व्यवहारेष्विति यावत्, ज्ञानिनामात्मविदां पामराणामज्ञानिनामुभयेषां च दृश्यते ॥

अज्ञविज्ञयोः समानायां त्रिपुट्यां को विशेष इति पृच्छति—

अथ केन विशेषेण ज्ञानी पामरतोऽधिकः ॥
इमं मे नाथ सन्देहं निवारयितुमर्हसि ॥३॥

अथेति प्रश्ने केन विशेषेण भेदद्योतकेन ज्ञानी आत्मवित्पुरुषः पामरतोऽज्ञानिनोऽधिकः । उत्तरार्धं स्पष्टम् । भोजनस्वापादिशरीरयात्रासु, इतरैः सह व्यवहारेषु च ज्ञानिनमसाधारणचर्याकं प्रतियन्ति प्राकृताः । तदसत् । ज्ञानित्वज्ञापकं बाह्यं लिङ्गं न विद्यत इति प्रथमाध्याय एव "सर्वभूतसमत्वेन लिङ्गेन ज्ञानमूह्यताम्" इति प्रतिपादितम् । तस्मात्सर्वभूतसमत्वेन ज्ञानिनो वैशिष्ट्यं पामरपुरुषादिति सिद्धम् । अत्र तु प्रश्ने विषयग्रहणे अज्ञविज्ञयोर्भेदोऽस्ति वा न वेति जिज्ञासा । विषयग्रहणं तु समानमेव दृश्यते उभयोर्व्यवहारे । तथा ह्युभयोरज्ञविज्ञयोः समक्षं कस्मिंश्चित्तृतीये पुरुषे गामानयेत्यन्यं ब्रुवाणे तद्वाक्यं शृण्वतोऽज्ञस्य विज्ञस्य च शाब्दबोधः समानो जायते । गौरानेतव्येति ज्ञानिनि वदति समान एव शाब्दबोधो ज्ञानिनोऽज्ञानिनश्च भवति । एवं पठनपाठनग्रन्थरचनादिष्वपि अन्तःकरणव्यापारोऽपि समानो दृश्यते । कर्मेन्द्रियज्ञानेन्द्रियव्यापारेषु रूपरसादिग्रहणेषु क्वचित् पामरतोऽपि पटीयान् दृश्यते ज्ञानी पुरुषः । तस्मादुद्गतः सन्देहः । कथमखण्डात्मस्वरूपनिष्ठस्य भेदशून्ये केवले वस्तुनि स्थितस्य विषयभेदग्रहणं पामरगतभेदधीवेदनं वा सम्भवति? अथ च ज्ञातृज्ञेयज्ञानात्मकत्रिपुटीप्रणष्टिरपि ज्ञानिनः प्रोच्यते । सति त्रिपुटीनाशे कथं ज्ञानिनोऽज्ञानिभिः सह व्यवहारः सम्भवति? त्रिपुट्यां सत्यां तु को वा भेदो ज्ञान्यज्ञानिनोः?

अथोत्तरमाह ॥

भगवानुवाच—

**अभिन्नो विषयी यस्य स्वरूपान्मनुजर्षभ ॥**
**व्यापारविषयौ भात- स्तस्याभिन्नौ स्वरूपतः ॥४॥**

मनुजर्षभ! यस्य पुरुषस्य विषयी ज्ञाता स्वरूपादभिन्नः आत्मस्वरूपादभिन्नोऽनन्य इति यावत्, भवति तस्य पुरुषस्य व्यापारविषयौ ज्ञानज्ञेयौ स्वरूपतः आत्मस्वरूपादभिन्नौ अनन्यौ भातः प्रतिभासमानौ स्तः । अयं भावः । ज्ञातृज्ञेयज्ञानात्मके त्रिके, ज्ञानं ज्ञेयं द्वयं च ज्ञात्रायत्तं, ज्ञातृगतत्वात् ज्ञेयविषयकज्ञानस्य । ज्ञातुरहंवृत्तिरूपतयाऽहंवृत्तेराश्रयस्य स्वस्वरूपस्यानन्यत्वं अवगन्तव्यम् । अखण्डात्मस्वरूपादहं-

वृत्तावुदितायां, यस्य पुरुषस्य स्वात्मस्वरूपाहंवृत्त्योः अम्भोधि-तरङ्गयोरिव जल-बुद्बुदयोरिवोभयोराश्रयाश्रितभावः कारणकार्यभावो वाऽनन्यत्वेन तादात्म्यसम्बन्धः स्वभावतः परिस्फुरति, तस्य विषयाख्यज्ञेयं वृत्त्याख्यज्ञानमुभे च स्वरूपादनन्ये भातः ॥

इदं फलितम् । ज्ञातुः स्वरूपानन्यत्वे ज्ञानज्ञेययोश्च स्वरूपानन्यत्वभानं सिद्धं, अहंवृत्तिरूपज्ञात्रधीनत्वाद् ज्ञानज्ञेययोः । एवं विदुषः पुरुषस्य व्यवहारे ज्ञातृ-ज्ञान-ज्ञेयानां स्वरूपेऽवस्थितिः स्फुटेति प्रतिपाद्य, अविदुषो विषयग्रहणमधिकृत्याह—

विभिन्नो विषयी यस्य स्वरूपादभिमानिनः ॥
व्यापारविषयौ भात- स्तस्य भिन्नौ स्वरूपतः ॥५॥

अभिमानिनो देहात्माभिमानिनः स्वस्वरूपमजानतो यस्य पुरुषस्य विषयी ज्ञाताऽहंवृत्त्यात्मकोऽस्मत्प्रत्ययगोचरः स्वरूपादात्मस्वरूपाद्विभिन्नः अन्यो भवति, तस्य पुरुषस्य व्यापारविषयौ, व्यापारो ज्ञानं वृत्तिः, विषयो ज्ञेयं, उभावपि स्वरूपतो भिन्नौ अन्यौ भातः । ज्ञातुर्विषयिणः स्वरूपाद्भिन्नत्वे सति ज्ञात्रधीनज्ञानज्ञेययोरपि स्वरूपाद्भिन्नत्वं भाति ॥

एवं विद्वदविदुषोर्विषयग्रहणे विशेषमुपन्यस्य उक्तमर्थं द्रढयति—

भेदाभासे विजानाति ज्ञान्यभेदं तु तात्त्विकम् ॥
भेदाभासवशं गत्वा पामरस्तु विभिद्यते ॥६॥

ज्ञानी पुरुषो भेदाभासे भेदस्याभासे भेदवत्प्रतिभासमाने, न तु वस्तुतो भेदे, तात्त्विकं वास्तविकमभेदं तु अनन्यतात्मकमेव विजानाति । तु एवकारार्थः । 'पामरस्तु' तु शब्दो व्यावृत्त्यर्थः । अविद्वान् पुरुषो ज्ञानिव्यतिरिक्तो 'भेदाभासवशं गत्वा' विषयेषु स्वरूपाद्भिन्नतया गृह्यमाणेषु तैर्हतः स्वरूपाद्विभिद्यते । तस्मादन्यमेवात्मानं मन्यते ॥

ज्ञातृज्ञानज्ञेयव्यवहारः समान एवाज्ञविज्ञयोर्दृश्यते । अत एव ज्ञानिनोऽज्ञानिभिः सह व्यवहारः शक्यो भवति । ग्रहणप्रकारे तु वर्तत एवोभयेषां भेदः । विज्ञो विषयस्य

ज्ञातारं विषयिणं अहमाकारवृत्तिकं अखण्डस्वरूपादनन्यं अहमहमित्यनवरतं हृदये स्फुरन्तमनुभवन् ज्ञेयं विषयं तस्मिन्नखण्डात्मस्वरूप एव पश्यति । तस्माद्भेदेष्वभेदं पश्यन्नात्मविद्भेदाभासवशङ्गतो न भवति, तस्य स्वरूपैक्यवशङ्गतत्वात् । अनात्मवित्पुरुषस्तु स्वस्वरूपमजानन् मूले विच्छिन्नज्ञानः, अत एवानवरताहंस्फूर्तिवियुतोऽहङ्कृतवृत्तिको विषयानपि विषयिणो ज्ञातुर्भिन्नान् ज्ञात्राश्रयस्वरूपाच्चान्यान् पश्यन् सर्वत्र भेदबुद्ध्यधीनो भवति ॥

इदमुक्तं भवति । यद्यप्यज्ञविज्ञयोरुभयोरपि समाना त्रिपुटी, तथाऽपि विज्ञे पुरुषे, तस्याः स्वरूपादनन्यतया भेदाभासत्वे सिद्धे, वस्तुतस्तस्याः प्रणष्टिरेव युक्ता वक्तुम् । एवं ज्ञानिनस्त्रिपुटीप्रणाशो बोध्यः । अज्ञे तु स्वरूपाद्भिन्नैव त्रिपुटी । देहात्माभिमानजन्ये स्वरूपाज्ञाने भेदमयत्वे तस्याः सिद्धे, यावदात्मस्वरूपावगमं सा प्राप्तप्रतिभासैवेत्यवदातम् ॥

कपाल्युवाच—

**नाथ यस्मिन्निमे भेदा भासन्ते त्रिपुटीमयाः ॥**
**शक्तिमद्वा स्वरूपं तद् उताहो शक्तिवर्जितम् ॥७॥**

अनन्तरोऽयं प्रश्नः । अखण्डात्मस्वरूपमभेदमुक्तम् । तत्रैव भेदा भासन्त इति चार्थात्प्राप्तम् । अथ कथमिमे भेदाः अभेदे वस्तुनि भासन्ते? किं भेदोत्पादकशक्तिरभेदस्वरूपस्यास्ति, उत न? असत्यां शक्तौ तस्यां कथं भासेरन् भेदाः? सत्यां तु कथमभेदमात्मस्वरूपं निश्चलं चलान् भेदान् जनयेत्? अखण्डात्मस्वरूपस्यैकत्वे सिद्धे तदन्यस्यासत्त्वे च प्रतिपादिते स्वरूपादन्यतः कथं भायुर्भेदाः? एवं जातायां शङ्कायां प्रथममयं प्रश्नः कृतः ॥

नाथ! महर्षे! यस्मिन् स्वरूपे त्रिपुटीमयाः मयट् प्राचुर्ये, ज्ञातृज्ञानज्ञेयबहुलाः भेदाः विभागरूपाः भासन्ते भान्ति, 'तत्स्वरूपं शक्तिमत् किं?', तस्य स्वरूपस्य शक्तिरस्ति किम्? 'उताहो शक्तिवर्जितं' अथवा नास्ति शक्तिस्तस्य?

भगवानुवाच—

वत्स यस्मिन्निमे भेदा भासन्ते त्रिपुटीमयाः ॥
सर्वशक्तं स्वरूपं त- दाहुर्वेदान्तवेदिनः ॥८॥

यस्मिन्नखण्डात्मस्वरूपे त्रिपुटीमया इमे पुरतो दृश्यमाना भेदा भासन्ते, वेदान्तवेदिनः औपनिषदतत्त्ववेत्तारस्तत्स्वरूपमात्मस्वरूपं सर्वशक्तं प्राहुः । वेदान्तवाक्यानि सर्वज्ञं सर्वशक्तं प्रतिपादयन्ति । तस्य च ब्रह्मणः सर्वात्मभावमुपदिशन्ति । "सोऽयमात्माऽपहतपाप्मा" "आत्मैवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यैरात्मनः सर्वात्मकत्वं ब्रह्मणः सर्वात्मकत्वं ब्रह्मात्मनोरेकत्वं च प्रतिपादितानि । "केवलं ब्रह्ममात्रं साक्षादात्मरूपेण भाति" इति ब्रह्मात्मैक्यं श्रीमहर्षिणोपदिष्टं च भवति । वेदान्तविद्याचार्यो भगवान् शङ्करगुरुः शारीरकभाष्येऽप्येवमेव ब्रह्मणः सर्वकारणत्वं सर्वशक्तत्वं सर्वेषामात्मत्वं च प्रत्यपादयत् । आह च– "सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं, मृत्सुवर्णादय इव घटरुचकादीनां, उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं मायावीव मायायाः, प्रसारितस्य जगतः पुनः स्वात्मन्येवोपसंहारकारणं अवनिरिव चतुर्विधस्य भूतग्रामस्य, स एव च सर्वेषां न आत्मेति प्रतिवेदान्तवाक्यसमन्वयेन प्रतिपादितम्" इति । अत्र वेदान्तिभिः प्रतिपादितं सर्वशक्तं स्वरूपमित्युक्तम् । स्वात्ममीमांसायाः प्राधान्यमुपदिशन् भगवान्महर्षिर्वेदान्तविदुक्तिषु स्वाभिमतं प्रदर्श्य प्रश्नानुसारेण प्रतिवचनमन्वगृह्णादिति बोध्यम् । जगज्जीवेश्वरमीमांसाया अपि स्वात्ममीमांसाया एव साक्षात्प्रयोजनत्वं बहुधोपपादयन् श्रीमहर्षिरितरमीमांसासु क्वचित्समतां क्वचिदौदासीन्यं वा मौनेन प्रकटयेदिति विदितमेवैतत् । अत्र शक्तिमीमांसायां प्रष्टर्यनुग्रहबुद्ध्या स्वात्मदृष्ट्यविरोधेन वेदान्तिमतमुदाहरत् ॥

वत्स, यद्यप्येवं सम्बोधने आश्रितवात्सल्यं सहजकरुणा वा स्फुटा, तथाऽपि प्रश्नगौरवप्रष्टृलाघवापेक्षयेदमुक्तं भवति । वत्स शिशो, तत्त्वं न जानीषे । अत एव विक्षिप्ता वृत्तिरीदृशे प्रश्नाय भवति । शक्तिविषयकां तव शङ्कां तु समाधास्य एव इत्युपपन्नं सम्बोधनम् ॥

कपाल्युवाच—

ईश्वरस्य तु या शक्ति- र्गीता वेदान्तवेदिभिः ॥
अस्ति वा चलनं तस्या- माहोस्विन्नाथ नास्ति वा ॥९॥

अयं पूर्वानुबन्धी प्रश्नः । सर्वशक्तं स्वरूपमित्युक्तम् । इहाचलस्वरूपस्य शक्तिः कीदृशी? किं सा चलति, उत नेति पृच्छति । नाथ, महर्षे! वेदान्तवेदिभिरीश्वरस्य या शक्तिर्गीता तस्यां चलनमस्ति वा, आहोस्विन्नास्ति?

किं सा चलनव्यापारवती उत नेति प्रश्ने, चलनक्रियायाः शक्त्यधिकरणत्व-मुक्तम् । अयमस्याशयः । भगवता महर्षिणा स्वरूपस्याचलत्वं बहुधा प्रतिपादितम् । तच्च शक्तिमदिति चाभ्युपगतम् । शक्तेश्चलनं अभ्युपगच्छति वेति प्रष्टुः शङ्का । अत एव चलनं यतः कुतोऽपि वा भवतु । तस्याधिकरणं स्वरूपशक्तिरिति भगवाननुगृह्णाति वा न वेति सप्तमी प्रायुक्ति, न शक्तेरिति षष्ठी ॥

भगवानुवाच—

शक्तेः सञ्चलनादेव लोकानां तात सम्भवः ॥
चलनस्याश्रयो वस्तु न सञ्चलेति कर्हिचित् ॥१०॥

भगवान्महर्षिस्तु पूर्वोक्तां शङ्कामपनुदति शक्तेरेव चलनमित्युक्त्या । तात! प्रीत्या सम्बोधनम् । 'शक्तेः सञ्चलनादेव लोकानां सम्भवः' । जगत्सृष्टेर्निमित्त-कारणं शक्तिरित्यर्थः । सा च शक्तिरीश्वरादनन्या । तस्मात् शक्तिरेव निमित्तं जगतो नेश्वर इति माभूद्भ्रमः । आह चोत्तरार्धेन तमेवार्थम् । चलनस्य शक्तिव्यापारस्य क्रियारूपस्याश्रयो वस्तु कर्हिचिन्न सञ्चलति, तस्य नित्यनिश्चलत्वात् । स्वरूपं वस्त्वेव आश्र-योऽधिकरणमधिष्ठानं वा भवति जगज्जालसर्गहेतोः सर्वस्यापि चलनस्य, न तु शक्तिः, तस्या एव चलनरूपत्वात् । सर्वत्राश्रयोऽधिष्ठानं वा वस्त्वेव न शक्तिरिति बोधयितुं, 'अस्ति वा चलनं तस्यां' इति प्रश्नस्य शक्तेः सञ्चलनात्' एवेति प्रतिवचनं ददानो भगवान् सर्वाश्रयभूतस्वरूपस्याचलत्वं पुनः स्मारितवान् ॥

अचलस्य तु यच्छक्ते- श्चलनं लोककारणम् ॥
तामेवाचक्षते माया- मनिर्वाच्यां विपश्चितः ॥११॥

अचलस्य वस्तुस्वरूपस्य लोकापेक्षयेश्वरस्य यत् पूर्वश्लोकोक्तं शक्तेश्चलनं लोककारणं उच्यते, तामेव विपश्चितो विद्वांसः, अनिर्वाच्यां निर्वक्तुमशक्यां मायामाचक्षते । शक्तिचलनस्य मायात्वोक्तेर्विधेयप्राधान्यात् यच्छब्देन परामृष्टस्य तच्छब्दस्य तामिति स्त्रीलिङ्गम् । यथा ब्रह्मप्रतिपादने शब्द एव प्रमाणं नानुमानं, तथा तच्छक्तिचलनरूपस्य लोककारणस्य मायाख्यस्य प्रतिपादने तर्कयुक्तिर्दुर्घटा । तत्र विपश्चिद्वचनं प्रमाणमिति गमयितुं अनिर्वाच्यामिति मायाविशेषणोपादानमित्यवगन्तव्यम् । "उत्पन्नस्य जगतः स्थितिकारणं मायावीव मायाया" इत्युदाहृतभगवत्पादोक्तेश्च चलनस्य मायाख्यस्याश्रयो मायावीव वस्तुस्वरूपं निश्चलमिति बोध्यम् ॥

अथ स्वरूपादनन्यायाः शक्तेश्चलने लोककारणतया प्रतिपाद्यमाने, कथं स्वरूपस्य तु नैश्चल्यं भवतीति शङ्कायां समाधीयते—

चञ्चलत्वं विषयिणो यथार्थमिव भासते ॥
चलनं न नरश्रेष्ठ स्वरूपस्य तु वस्तुतः ॥१२॥

विषयिणो विषयान्गृह्णतः साहङ्कारस्य देहात्माभिमानिनस्त्रिपुटीस्थस्य ज्ञातुः चञ्चलत्वं दृश्यमानं शक्तिचलनं यथार्थमिव भासते, वस्तुतो न यथार्थमिति भावः । नरश्रेष्ठ! स्वरूपस्य तु चलनं वस्तुतः परमार्थतो न भवति । तु शब्दः शक्तेरेव चलन-मिति तद्व्यावर्तनार्थः । किं तर्हि ईश्वरादन्यस्याविद्यमानत्वात् शक्तेस्तदनन्यत्वं प्रति-पाद्य, पुनः शक्तेरेव चलनं स्वरूपस्य नेति द्वयोर्भेद उच्यत इति संशये प्राप्ते परिह्रियते ॥

ईश्वरस्य च शक्तेश्च भेदो दृष्टिनिमित्तकः ॥
मिथुनं त्विदमेकं स्याद् दृष्टिश्चेदुपसंहृता ॥१३॥

ईश्वरस्य सर्वशक्तस्य सर्वलोकचालकस्य सर्वशक्तिचलनाश्रयस्य शक्तेश्च तच्छक्तेश्चोभयोर्भेदो दृष्टिनिमित्तकः साहङ्कारस्य स्वरूपमपश्यतः पुरुषस्य द्रष्टुर्दृष्टिर्निमित्तं हेतुर्यस्य सः अज्ञदृष्टौ स्वरूपतच्छक्त्योर्भासमानस्य भेदस्याभासो न विद्यते । दृष्टिर्विषयग्राहिणी अविदुषो विषयवृत्तिविकीर्णा बुद्धिरुपसंहृता चेत्, विनिवार्य मूलस्वरूपं प्रापिता चेत्, इदं मिथुनं तु एकं स्यात्, ईश्वरः शक्तिश्चेति द्वन्द्वमेकमेव भवेत् । ईश्वर एव शक्तिः शक्तिरेवेश्वर इति एकस्वरूपविज्ञानं फलितं भवेदिति भावः ॥

ईश्वरशक्त्योरभेदो भेददृष्ट्युपसंहारात् सिद्ध्यतीत्युक्तम् । तेन पुरुषविशेषस्य स्वरूपज्ञानिनो भेददृष्ट्युपमर्देन ईश्वरशक्तिचलनं लोककारणं किं बाध्यते उत नेति संशये उद्गते, प्रश्नः क्रियते ॥

कपाल्युवाच—

> व्यापार ईश्वरस्यायं दृश्यब्रह्माण्डकोटिकृत् ॥
> नित्यः किमथवाऽनित्यो भगवान्वक्तुमर्हति ॥१४॥

दृश्यब्रह्माण्डकोटिकृत् प्रत्यक्षं दृश्यानां स्थूलानां ब्रह्माण्डानां कोटिं करोति यः, सोऽयमीश्वरस्य व्यापारश्चलनात्मकः किं नित्यः, ईश्वरस्य नित्यत्वात्? अथवा अनित्यश्चलत्वात् इति प्रश्नः ॥

भगवानुवाच—

> निजया परया शक्त्या चलन्नप्यचलः परः ॥
> केवलं मुनिसंवेद्यं रहस्यमिदमुत्तमम् ॥१५॥

परः पुमानीश्वरो निजया स्वीयया परया शक्त्या उत्तमया सहजया चिच्छक्त्या चलन्नपि, अचलः चलनेन न बाध्यते । चलनं प्रति स्वस्यैव नित्याश्रयत्वात् । 'इदं रहस्यं' शतशो वाचोपदिष्टमपि दुर्बोधं, 'मुनिसंवेद्यं' अनुभवैकवेद्यत्वात् आत्मनिष्ठैरेवानुभाव्यम् । 'उत्तमं' अस्मादपि रहस्यतरं न विद्यते गूढाद्गूढतरमिति यावत्, 'केवलं'

निर्णीतमात्मविद्भिः सिद्धान्तितमिति यावत् । शक्त्या चलत्यपि पर आत्मा स्वयं न चलतीन्युक्तौ चलनाचलनयोर्विरोधः परस्वरूपसंवेदनेन परिहृतः स्यान्न तु तर्कजटिलैः शुष्कवादैरिति केवलमुनिसंवेद्योत्तमपदानि रहस्यस्य विशेषणत्वेनोपात्तानि ॥

इतः परं आपरिसमाप्तेरध्यायस्य श्रुत्यर्थसमर्थनपूर्वकं शक्तिविचारोपन्यासमुखेन परवस्तुन आत्मस्वरूपस्याचलत्वमिव सर्वशक्तत्वं च नित्यमिति प्रतिपादयति ॥

चलत्वमेव व्यापारो व्यापारः शक्तिरुच्यते ॥
शक्त्या सर्वमिदं दृश्यं ससर्ज परमः पुमान् ॥१६॥

प्रश्ने व्यापारशब्दः प्रयुक्तः प्रष्ट्रा । भवितुर्भवनस्यानुकूलो भावयितुर्व्यापारो भावनेत्याहुः शास्त्रविदः । किमिह व्यापारेण भावनाऽभिप्रेता अन्यद्वा? अत्र भगवान् महर्षिराह— चलत्वमेव व्यापार उच्यते, व्यापारश्च शक्तेर्नातिरिक्त इति । तया चलनात्मिकया व्यापाराख्यया शक्त्या करणेन परमः पुमान् कर्ता दृश्यमिदं सर्वं ससर्ज । सर्वस्यास्य दृश्यस्य जगतो द्रष्टा परमेश्वरः स्वशक्त्या स्रष्टाऽभवत् । व्यापारस्य भावनात्वेऽपि अविरोधो भगवद्वाचा सिद्धः । अथ व्यापारस्य द्वैविध्यं वाजसनेयिश्रुतिवाक्यं चोपपादयति—

व्यापारस्तु प्रवृत्तिश्च निवृत्तिरिति च द्विधा ॥
निवृत्तिस्था यत्र सर्वं मात्मैवाभूदिति श्रुतिः ॥१७॥

व्यापारः प्रवृत्तिर्निवृत्तिरिति च द्विधोच्यते । शक्तेः प्रवृत्तिनिवृत्त्यात्मकोभयविधत्वात् । पूर्वार्धेन व्यापारस्य द्विप्रकारतामुक्त्वा, उत्तरार्धेन निवृत्तिरूपव्यापारं श्रुतिवचनोदाहरणेनोपपादयति । "यत्र सर्वमात्मैवाभूत्" इति श्रुतिर्निवृत्तिस्था निवृत्तिपरेति भावः । "यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥"
इत्यनेन संहितोपनिषन्मन्त्रेण विदुषः पुरुषस्येमानि सर्वाणि भूतान्यात्मस्वरूपेणैव भान्तीति

प्रतिपाद्यते । चित्तविक्षेपाद्विनिवृत्तवृत्तेरात्मविदः सर्वत्रैकत्वदर्शनात् वीतशोकमोहत्वं प्रतिपादयत्यस्मिन्मन्त्रे दृष्ट्युपसंहाररूपनिवृत्तिव्यापारेण आत्मैकत्वमुपदिष्टम् ॥

अथास्मिन्नेव मन्त्रे प्रवृत्तिपरोऽपि व्यापारो गम्यत इत्युत्तरश्लोकेनाचष्टे—

**नानात्वं द्वैतकालस्थं गम्यते सर्वमित्यतः ॥**
**अभूदिति पदेनात्र व्यापारः कोऽपि गम्यते ॥१८॥**

"सर्वमित्यतः" सर्वमात्मैवाभूदित्यत्र सर्वमित्यस्मात्पदात् द्वैतकालस्थं नानात्वं गम्यते । नानात्वं चानेकत्वम् । सत्स्वेवानेकेषु तेषां समसनं सर्वमिति सर्वशब्दार्थसङ्गतेः । नित्यस्यैकस्य कथं नानात्वमिति चेत्, अनेकत्वभानं न नित्यं सार्वकालिकं चेति वेदयितुं द्वैतकालस्थमिति नानात्वविशेषणोपादानम् । द्वैतकालस्थमित्यत्र कालो दशाविशेषद्योतकः, आत्मनोऽन्यत्वेन विषयग्रहणावस्थाभेदो ग्राह्यः । तस्मान्नानात्वं तात्कालिकमिति बोध्यम् । कथं तर्ह्यद्वितीयस्यात्मनो द्वैतभावापत्तिः? उत्तरार्धेनाह सर्वभवनव्यापारेणेति । अत्र वाक्ये 'अभूत्' इति पदेन कोऽपि व्यापारो गम्यते । सन्नात्मा एकोऽनेकं सर्वं भवतीति सर्वभवनक्रियारूपो व्यापारो द्योत्यत इत्यर्थः । यद्यपि सत्तार्थकावेव उभावपि अस्ति-भवतिधातू, तथाऽपि क्वचित् सूक्ष्मो विशेषो धात्वर्थे द्रष्टव्यः अस्ति-भवत्योः । अस्ति स्वरूपमित्यत्र निर्व्यापारता, 'आत्मा सर्वमभूत्' 'सच्चत्यच्चाभवत्' इत्यादौ भवनक्रियाया व्यापारता चावगन्तव्ये । तस्मात् आत्मनः सर्वभूतभावेन भवनं जायमानत्वेन भानं अभूत्पदेन गम्यत इति प्रवृत्तिपरा श्रुतिः पूर्वश्लोकोदाहृता भवतीति प्रोक्तम् । अथेदं चेह द्रष्टव्यम् । नेह विषयिणमहङ्कारिणमुद्दिश्य तस्य नानात्वभानं द्वैतकालिकमिति ग्राह्यम् । प्रकरणादात्मानं परमं पुरुषमुद्दिश्यैवोक्तं, 'निजया परया शक्त्या ससर्ज परमः पुमान्' इति प्रस्तुतत्वात् । कथं सार्वकालिकस्य कालातीतस्य वा आत्मनो द्वैतकालो वदितुं शक्यत इति चेत्, तदाश्रितशक्तिविलासादिति स एव विषयोऽत्र प्रश्नोत्तरमुखेन विचार्यते । वक्ष्यति च भगवानध्यायान्ते 'सृष्टिः स्यादीशकल्पना' इति । अस्त्वेवम् । कथं पुनः पूर्वश्लोके 'सर्वमात्मैवाभूत्' इति निवृत्तिपरत्वेनाख्यायेह पुनः प्रवृत्तिपरत्वेन व्याख्यायत इति चेद्ब्रूमः ।

श्रुतिप्रकरणं तु विदुषः सर्वेषु भूतेष्वात्मैकत्वदर्शन-वीतशोकमोहत्वप्रतिपादनपरम् । इह तु कथमेकस्यात्मनः सर्वभूतभावत्वं सम्भवतीत्युपपत्तिं भवनक्रिययेति दर्शयति । एवं 'सर्वमात्मैवाभूत्' इति वाक्ये सर्वमभूदिति पदद्वयमस्मिन् श्लोके व्याख्यातम् ॥

अथ आत्मैवेति विनिर्देशस्य प्रयोजनमाह—

**आत्मैवेति विनिर्देशा- द्विशेषाणां समन्ततः ॥**
**आत्मन्येवोपसंहार- स्तज्जातानां प्रकीर्तितः ॥१९॥**

'आत्मैवेति विनिर्देशात्' नानात्वगर्भितं सर्वमपि आत्मैव नान्यदिति दृढोक्त्या प्रतिपादनात्, तज्जातानां तस्मादात्मनो जातानां भूतानां समन्ततः सर्वतो विशेषाणां नानारूपाणां भेदानां आत्मन्येवोपसंहारो लयः प्रकीर्तितः । सर्वस्यापि जन्मस्थिति-भङ्गं आत्मन्याश्रये वस्तुस्वरूप एवेत्युक्तं भवति ॥

अथ शक्तिस्वरूपयोः सम्बन्धं विशदयति—

**विना शक्तिं नरश्रेष्ठ स्वरूपं न प्रतीयते ॥**
**व्यापार आश्रयश्चेति द्विनामा शक्तिरुच्यते ॥२०॥**

नरश्रेष्ठ! 'शक्तिं विना स्वरूपं न प्रतीयते' स्वरूपमस्तीति प्रतीतिः शक्त्यैव भवति । असत्यां शक्तौ स्वरूपप्रत्यय एव न स्यात् । व्यापारश्चलनात्मक आश्रयश्चेति शक्तिर्द्विनामा, द्वे नामनी यस्याः सोच्यते । वस्त्वेकमेव भवति । तत् शक्तिरित्यभि-धीयते चेत्, आश्रयो व्यापार इति द्वाभ्यां नामभ्यां तद्वाच्यं स्यात् । यदि शक्तेः परत्वमुच्येत तर्हि सैवाश्रयो व्यापारश्च भवेत्, तद्विवरणार्थकं नामद्वयं वक्तव्यम् । कुतो नामद्वयं शक्तेरिति चेत् सर्जनं तदाश्रयः कारणं च सैवेत्याह ॥

**व्यापारो विश्वसर्गादि कार्यमुक्तं मनीषिभिः ॥**
**आश्रयो द्विपदां श्रेष्ठ स्वरूपान्नातिरिच्यते ॥२१॥**

द्विपदां श्रेष्ठ, नरश्रेष्ठ! व्यापारो विश्वसर्गादि कार्यं मनीषिभिरुक्तम् । आदि-शब्देन स्थितिलयतिरोधानानुग्रहा ग्राह्याः । एतत्सर्वं कार्यं व्यापारशब्देनाभिधीयते । आश्रयः स्वरूपान्नातिरिच्यते । स्वरूपमेवाश्रय आधारः कारणं भवति कार्यस्य । कार्य-कारणयोस्तादात्म्यसम्बन्धादेकैव शक्तिर्द्विनामा प्रोच्यत इत्युपपत्तिर्बोध्या । पुनश्च शक्ते-र्व्यापारात्मकत्वं स्वरूपात्मकत्वं च द्रढयति ॥

स्वरूपमन्यसापेक्षं नैव सर्वात्मकत्वतः ॥
शक्तिं वृत्तिं स्वरूपं च य एवं वेद वेद सः ॥२२॥

स्वरूपं सत्तात्मकं नैवान्यसापेक्षं, अन्यनिरपेक्षं स्वतःसिद्धत्वात् । कुतः स्वतः-सिद्धिः? सर्वात्मकत्वतः सर्वस्यापि सत्ताप्रत्ययाश्रयत्वेन स्वरूपेऽवस्थानात् स्वरूपस्यैव सर्वात्मनाऽवस्थितत्वाच्च । यः पुरुषः शक्तिं (उद्देश्यं) एवं उक्तप्रकारेण वृत्तिं व्यापारं, स्वरूपमाश्रयं च, उभयमपि (विधेयं), वेद जानाति, स वेद तत्त्वैक्यं स विजानाति । यस्तु व्यापाराश्रययोः शक्तिस्वरूपयोः भेदं पश्यति सोऽज्ञ इत्युक्तं भवति ॥

वृत्तेरभावे तु सतो नानाभावो न सिद्ध्यति ॥
सत्ता शक्त्यतिरिक्ता चेद्‌ वृत्तेर्नैव समुद्भवः ॥२३॥

शक्तेर्व्यापारात्मकत्वमुक्तम् । शक्त्यैव परमः पुमान् इदं सर्वं ससर्जेति प्रति-पादनात्, सत्यामेव शक्तौ एकस्य वस्तुनो नानात्वसम्पत्तिरित्यन्वयेनोपपादितम् । इदानीं असत्यां शक्तौ नानात्वं नेति व्यतिरेकेणाह । वृत्तेरभावे सतो वस्तुन एकस्वरूपस्य नानाभावो न सिद्ध्यति । व्यापाराख्यया शक्त्या वृत्त्यैव सृष्टेर्नानात्वसम्भवप्रतिपादनात् । 'सत्ता शक्त्यतिरिक्ता चेत्' शक्तिमतीतायां सत्तायां 'वृत्तेर्नैव समुद्भवः' नैवोदेति वृत्तिः ॥

कथं पुनर्वृत्तिरेव शक्तिः शक्तं च स्वरूपमिति पूर्वं प्रतिपाद्य, इदानीमवृत्तिकं अत एवाशक्तं स्वरूपमिति निर्विशेषसत्तामात्रप्रतिपादनमुपपन्नमिति चेत्, नेह निर्विशेषसत्ता-

प्रतिपादनाय सत्तायां शक्त्यतिरिक्तायां वृत्त्यनुद्भव उक्तः, प्रत्युत वस्तुस्वरूपस्य नित्य-शक्तत्वं निरूपयितुमेवेत्याह ॥

यदि कालेन भविता जगतः प्रलयो महान् ॥
अभेदेन स्वरूपेऽयं व्यापारो लीनवद्भवेत् ॥२४॥

कालेन जगतो महान् प्रलयो भविता यदि, अयं व्यापारः स्वरूपे लीनवद्भवेत् इति योज्यम् । उत्पन्नस्य नश्वरत्वं सर्वेषामभिमतम् । सर्वेषां सृष्टानां लोकानां समानकालो विलय इति निर्णेतुं न शक्यते, तेषां सृष्टिश्च समकालेति निश्चयासिद्धत्वात् । यत्सृष्टं तन्नष्टं भवतीति तु असन्दिग्धम् । सर्वस्या अपि जगत्समष्टेरात्यन्तिकविनष्टिः समकाला सम्भवेच्चेत्, तदाऽपि येन व्यापारेण सर्वं सृष्टं स व्यापारस्तदाश्रये वस्तुस्वरूपे लीन-वद्भवेत् । न तस्य विनष्टिर्भवति । तस्य स्वाश्रयवस्त्वविवियोज्यत्वादिति भावः । अभेदेन स्वरूपे भवेदित्युक्त्या शक्तेः स्वरूपेण तादात्म्यसम्बन्धो बोध्यः । तादृश-स्वरूपशक्त्यैव परमस्य पुंसः सृष्टिर्भवति, ज्ञातुर्विषयिणो विज्ञानं चेत्याह ॥

सर्वोऽपि व्यवहारोऽयं न भवेच्छक्तिमन्तरा ॥
न सृष्टिर्नापि विज्ञानं यदेतत्त्रिपुटीमयम् ॥२५॥

शक्तिमन्तरा शक्तिं वर्जयित्वा सर्वोऽप्ययं व्यवहारः, अयमिति निर्देशेन प्रकृतो भक्तप्रश्नकरणभगवदुत्तरदानरूपोपि व्यवहारो ज्ञेयः । सोऽपि न भवेत् । सृष्टिर्न भवेत् । असत्यां सृष्टावसदादीनां सत्ताव्यवहार एव न भवेत्, किमुत ‘विज्ञानं यदेतत् त्रिपुटी-मयं’ ज्ञातृज्ञानज्ञेयात्मकं त्रिपुटीमयं विज्ञानं विशेषग्राहिवृत्तिरूपं ज्ञानमपि न भवेत् । तस्मात्स्वरूपशक्त्यैवेदं सर्वं सिद्ध्यतीति भावः । पूर्वमुक्तं शक्तेर्नामद्वयम् । सहेतुकं तदेवाह—

स्वरूपमाश्रयत्वेन व्यापारः सर्गकर्मणा ॥
नामभ्यामुच्यते द्वाभ्यां शक्तिरेका परात्परा ॥२६॥

परात्परा सर्वोत्तमा सर्वातीता एका शक्तिः आश्रयत्वेन निश्चलवस्त्वात्मकाधारतया स्वरूपमिति नाम्ना, सर्गकर्मणा सृष्टिकार्येण, कृत्यान्तराणामप्युपलक्षणं सर्गकर्म, एवं व्यापारो विश्वसर्गादीत्युक्तेन सङ्गच्छते। अतः सृष्ट्यादिकार्येण हेतुना व्यापार इति नाम्ना, एवं द्वाभ्यां नामभ्यामुच्यते। एवं शक्तेः परात्परत्वमभिमन्यमानैस्तस्या नामद्वयमभ्युपगन्तव्यम् ॥

अथ ये चलनमेव शक्तेर्लिङ्गं मन्यन्ते तान्प्रत्याह—

लक्षणं चलनं येषां शक्तेस्तेषां तदाश्रयः ॥
यत्किञ्चित्परमं वस्तु वक्तव्यं स्यान्नरर्षभ ॥२७॥

नरर्षभ, नरश्रेष्ठ! येषां मते शक्तेर्लक्षणं चलनं भवति, तेषां मते तदाश्रयश्चलनाश्रयो यत्किञ्चित् परममुत्तमं सर्वत्र देशे काले च नैश्चल्येन सिद्धं वस्तु वक्तव्यं स्यात् उच्येतेत्यर्थः। चलनव्यापारस्याश्रयसापेक्षत्वात्। सर्वथाऽप्येकमेव परं तत्त्वं बहुधा गीयत इत्याह—

तदेकं परमं वस्तु शक्तिमेके प्रचक्षते ॥
स्वरूपं केऽपि विद्वांसो ब्रह्मान्ये पुरुषं परे ॥२८॥

तत् तच्छब्दवाच्यं सत् एकमद्वितीयं परमं वस्तु कर्म, एके जनाः शक्तिं प्रचक्षते, शक्तिरिति नाम्ना व्यवहरन्ति, केपि विद्वांसः स्वरूपमित्याहुः। अन्ये ब्रह्मेति। परे पुरुषं पुरुष इति च प्राहुः। एकस्य सतो बहुधा कल्पनं मन्त्रवर्णाश्च गायन्ति— ‘एकं सन्तं बहुधा कल्पयन्ति” इत्याद्याः ॥

अथ द्विधा सत्यं बोध्यमित्याह—

वत्स सत्यं द्विधा गम्यं लक्षणेन च वस्तुतः ॥
लक्षणेनोच्यते सत्यं वस्तुनस्त्वनुभूयते ॥२९॥

वत्स, जातेति प्रियसम्बोधनम् । सत्यं परमं लक्ष्यं द्विप्रकारेण गम्यमवगन्तव्यम् । कथम्? लक्षणेन वस्तुतश्च गम्यम् । लक्षणेन सत्यमुच्यते, वस्तुतस्त्वनुभूयते स्वरूपेणेत्यर्थः । किमिदं लक्षणं येन सत्यं लक्ष्यते? व्यापारो वृत्तिः शक्तिर्वा भवति लिङ्गं, येन लक्षितं स्वरूपं प्रतीयते । तस्मात् स्वरूपप्रत्यययोऽपि वृत्त्यैव सिद्ध्यति । विना शक्तिं, नरश्रेष्ठ! स्वरूपं न प्रतीयत इत्युक्तमेवार्थं प्रकारान्तरेण स्वरूपव्यापारयोर्लक्ष्यलक्षणभावप्रतिपादनद्वारा ब्रवीति ॥

लक्षणेन वृत्त्यात्मकं ज्ञानं, वस्तुतोऽनुभवात्मकं स्वरूपज्ञानमिति द्विधा सत्यस्य गम्यत्वे प्रतिपादिते, अनुभवैकवेद्यस्य वस्तुनो वाङ्मानसयोरतीतत्वात्, वृत्त्यात्मकं लक्षणमेव स्वरूपावगतिपर्यन्तं साधनं भवतीति फलितम् ॥

अथ वेदान्तिनोऽपि सच्चिदानन्दस्वरूपं ब्रह्म तटस्थलक्षणेनावस्थात्रयसाक्षित्वेन गम्यं प्रतिपादयन्तीति ध्वनयन्नाह—

**तस्मात्स्वरूपविज्ञानं व्यापारेण च वस्तुतः ॥**
**ताटस्थ्येन च साक्षाच्च द्विविधं सम्प्रचक्षते ॥३०॥**

तस्मात् द्विधा गम्यत्वात् स्वरूपविज्ञानं ताटस्थ्येन व्यापारेण, साक्षाच्च वस्तुतो द्विविधं सम्प्रचक्षते । अयं भावः । स्वरूपस्यैकत्वेऽपि तद्विज्ञानं तटस्थलक्षणेन व्यापारेण गम्यं, अपरोक्षानुभवेन च गम्यम् । एवं द्विविधं प्राहुः ॥

पुनश्चेममर्थं त्रिभिः श्लोकैः स्पष्टयति—

**स्वरूपमाश्रयं प्राहु व्यापारं तात लक्षणम् ॥**
**वृत्त्या विज्ञाय तन्मूल माश्रये प्रतितिष्ठति ॥३१॥**

तात! स्वरूपमाश्रयं प्राहुः । व्यापारं लक्षणं प्राहुः । वृत्त्या शक्तिव्यापारलक्षणापरपर्यायवृत्तिपदवाच्यया विज्ञानवृत्त्या तन्मूलं वृत्तिमूलं वृत्त्युदयस्थानमिति यावत्, विज्ञायावगम्य, आश्रये लक्ष्ये वस्तुस्वरूपे सत्ये प्रतितिष्ठति प्रतिष्ठितो भवति

पुरुष इत्यध्याहार्यम् । अनेन वृत्तेः शक्तेर्लक्षणस्य व्यापारस्य वा प्रयोजनमुक्तम् वृत्तिमूलान्वेषणेन साहङ्कारविनष्टिद्वारा तन्मूलं वस्तुस्वरूपं ब्रह्मात्माहंस्फूर्तिज्वलितं हृदः प्राप्यत इत्यत्रैव ग्रन्थे सद्दर्शने श्रीरमणीयनिबन्धेष्वन्येषु च शतश उपदिष्टमिह ज्ञाप्यम् ।

स्वरूपादुदयो वृत्तेर्विलयश्च तत्रैवेति स्वरूपानन्यत्वे वृत्तेः सिद्धे, उभयोस्तादात्म्य सम्बन्धोपपत्तिमाह—

**स्वरूपं लक्षणोपेतं लक्षणं च स्वरूपवत् ॥**
**तादात्म्येनैव सम्बन्ध- स्त्वनयोः सम्प्रकीर्तितः ॥३२॥**

स्वरूपं लक्षणोपेतं तस्य लक्ष्यत्वात् लक्षणयुक्तं भवति । लक्षणं च स्वरूपवत् । एवमनयोः स्वरूपलक्षणयोर्वृत्त्याश्रययोर्व्यापारव्यापारवतोः शक्तिशक्तयोः तादात्म्येनैव सम्बन्धः परिकीर्तितः । तादात्म्यं च तद्भिन्नत्वे सति तदभिन्नसत्ताकत्वम् । इह लक्षणस्य स्वरूपाद्भिन्नत्वे सति, स्वरूपादभिन्नसत्ताकत्वं विवक्षितम् । वृत्तिस्वरूपयोः परस्परमनन्यभावः फलितार्थः ॥

**तटस्थलक्षणेनैवं व्यापाराख्येन मारिष ॥**
**यतो लक्ष्यं स्वरूपं स्या- न्नित्यव्यापारवत्ततः ॥३३॥**

यतो यस्मात् एवमुक्तप्रकारेण व्यापाराख्येन तटस्थलक्षणेन स्वरूपं लक्ष्यं लक्षयितुं शक्यं स्यात्, ततस्तस्मात् तत्स्वरूपं नित्यव्यापारवत् प्रवृत्तिनिवृत्त्यात्मकव्यापारसम्पन्नं नित्यशक्तमिति यावत्, भवतीति वाक्यशेषः । 'सर्वोऽपि व्यवहारोऽयं न भवेच्छक्ति-मन्तरा । न सृष्टिर्नापि विज्ञानं यदेतत्त्रिपुटीमयम् ॥' 'यदि कालेन भविता जगतः प्रलयो महान्' इति श्लोके च शक्त्या सर्वव्यवहारसिद्धिः, सा च शक्तिर्नित्यस्वरूपस्थेति प्रतिपादितमिह स्मार्यम् ॥

एवं भेदविज्ञानस्य मूलमुपन्यस्य अध्यायान्ते श्लोकद्वयेन पुरुषस्य जिज्ञासोरभेद-दृष्टावेव सत्यत्वबुद्धिः स्यादिति भावनासिद्धाज्जगतो दृष्टिं विनिवार्य स्वरूपेऽवस्थानं परमं

पदमिति च परमकारुणिको भगवान् महर्षिः प्रष्टारं निमित्तीकृत्य सत्यजिज्ञासुलोकं स्वरूपाभिमुखं विधातुमनुगृह्णाति ॥

**व्यापारो वस्तुनो नान्य यदि पश्यसि तत्त्वतः ॥**
**इदं तु भेदविज्ञानं सर्वं काल्पनिकं मतम् ॥३४॥**

तत्त्वतो याथार्थ्येन पश्यसि यदि उन्मीलितेनान्तश्चक्षुषा पश्यसि यदि, व्यापारो वस्तुनोऽन्यन्न, भेदबहुलस्य विषयप्रपञ्चस्य वृत्तिप्रपञ्चस्य वा कर्ता व्यापारः शक्त्याख्यो वस्तुस्वरूपान्न भिन्नो भवतीत्यर्थः । तस्मात्सत्सु भेदेषु स्वरूपव्यापारजन्येषु अभेदं वस्तुस्वरूपं द्रष्टुमर्हसीत्यादेशो बोध्यः । कथं तर्हि, इदं सर्वं भेदविज्ञानं अभेदात्सत्यवस्तुनो सिद्ध्यतीति चेदाह । इदं सर्वं भेदविज्ञानं तु काल्पनिकं मतम् । कल्पनया कृतमित्युच्यते । ज्ञातुर्विषयिण एव भेदविज्ञानं सम्भवति, ज्ञात्रधीनत्वादज्ञानस्य । कल्पनाया भेदविज्ञानकर्तृत्वे प्रतिपादिते, विषयी ज्ञातैव भवति समाश्रयः कल्पनायाः । भेदविशिष्टवृत्तिविक्षेपात्मकं ज्ञानमेव कल्पनाकार्यम् । कल्पना च भावनाया अनर्थान्तरम् । ततो वृत्तिरेव कल्पना, यया विषयाकारतया भेदबाहुल्येऽवस्थातुमिष्यते । तादृशी वृत्तिर्विषयविमुखतया स्वयं निवृत्य मूलं पश्येद्यदि स्वरूपाकारतयाऽवस्थाय, सर्वमभेदं पश्यतीति तात्पर्यम् ॥

इहाहङ्कृतं विषयिणमुद्दिश्य तद्गतकल्पनाया वृत्तिविक्षेपात्मकविषयभेदविज्ञानं निष्पादितमित्यतोऽस्य भेददर्शनहेतुः अहङ्कारि-विषयि-देहपरपर्यायजीवपदवाच्यस्य भावयितुर्भावना भवति, या चेह कल्पनेत्युच्यते । न तु सर्वं जगज्जीवकल्पनेत्युक्तम् । जगद्विषयकभेदज्ञानमेव जीवगतमिति कथनेन भेदभावनातो भावयितुर्जीवस्य निवृत्तिरिष्यते । तेन स्वरूपावस्थाने लब्धे तस्य सर्वात्मकत्वाद्भेदेषु सर्वेष्वभेदं पश्यति 'ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा' इत्यवगच्छति ॥

अथ सृष्टिः सर्वाऽपि जीवकल्पनेति मा भूद्भ्रमः । तदाह—

शक्त्युल्लासाह्वया सेयं सृष्टिः स्यादीशकल्पना ॥
कल्पनेयमतीता चेत् स्वरूपमवशिष्यते ॥३५॥

शक्त्युल्लासाह्वया शक्तेरुल्लासो विलासो विजृम्भणरूपः प्रवृत्तिव्यापार इति यावत् । स आह्वयोऽभिधानं यस्याः सा, इयं सृष्टिः परितो दृश्यमानं विश्वमित्यर्थः । ईशकल्पना, ईश्वरस्य विश्वरूपभावना भवतीति शेषः । शक्तिविलास एवेदं सर्वं, यदीश्वरस्य कल्पनया निष्पादितम् । जीवकल्पना तु सर्वभेदज्ञानवृत्तिनिष्पादिका । सर्वभावसम्पादिका तु ईश्वरभावनेति बोध्या । कथमयं जीवकल्पनेश्वरकल्पनयोर्भेद उच्यते? कल्पनासामर्थ्यभेदाज्जीवेश्वरयोरिति ब्रूमः । सर्वेषु वेदान्तेषु आत्मवित्पुरुषवाक्येषु च जीवेश्वरयोरभेदं प्रतिपादयत्सु, कथमयं तयोर्भेद उच्यते? प्रभुकिङ्करयोरिव तयोरीशित्रीशितव्यभावेन भेदो गृह्यते । यथा तयोर्मानुषत्वमात्रं समानं, तथा जीवेश्वरयोः समानमात्मस्वरूपम् । एकस्यैवात्मस्वरूपस्य सर्वभावसम्पत्तिप्रतिपादिकां ईशावास्यश्रुतिं अध्यायादावुदाहृत्य तां प्रवृत्तिपरतया निवृत्तिपरतया चोपपादितवान् । अतो जीव आत्मा परम आत्मेति द्वावात्मानौ वस्तुतो न स्तः । यद्यपि शक्तिपारम्यादीश्वरः सर्वज्ञः सर्वशक्तो भवति, जीवः किञ्चिज्ज्ञोऽल्पशक्तिर्भवति शक्तिविलाससाधितसर्गापेक्षयैव तयोरिव तत्कल्पनयोश्च भेदो वर्तते, तथाऽपि जीवः स्ववृत्त्यैव कल्पनातो निवृत्तः स्वात्मस्वरूपेऽवस्थातुं शक्तो भवति । तदाहोत्तरार्धेन । इयं कल्पना या ईशकल्पना सृष्टिरूपिणी शक्तिविलासाख्या उक्ता, साऽतीता चेदतिक्रान्ता चेत् स्वरूपमवशिष्यते । आत्मैवावशिष्टो भवति । भेदात्मकमात्मनोऽन्यन्नष्टं भवतीत्यर्थः । कथमीशकल्पनां ब्रह्माण्डसृष्टिमतीत्य स्थातुं कोऽपि प्रभवति? स्थूलविषयाकारतया परिणतानां वृत्तीनामुपसंहारेणेत्युच्यते । तदा हि तासामाश्रयो वस्तुस्वरूपं ब्रह्मात्मभावेन पूर्णं अहमहमिति स्फुरत् हृदयं सदेव सर्वदा सर्वत्र भासते ॥

॥ इति द्वादशोऽध्यायः ॥

# ॥ त्रयोदशोऽध्यायः ॥

अस्मिन्नध्याये स्त्री-पुरुषयोः समानः सन्यासाधिकारो निरूप्यते । अत्रास्मदाचार्याणी प्रष्ट्री, यां ग्रन्थकृदाचार्यः प्रथमं चतुर्भिः श्लोकैः प्रस्तौति—

अत्रीणामन्वयज्योत्स्ना वसिष्ठानां कुलस्नुषा ॥
महादेवस्य जननी धीरस्य ब्रह्मवेदिनः ॥१॥

प्रतिमानं पुरन्ध्रीणां लोकसेवाव्रते स्थिता ॥
बिभ्राणा महतीं विद्यां ब्रह्मादिविबुधस्तुताम् ॥२॥

दक्षिणे विन्ध्यतः शक्तेस्तारिण्या आदिमा गुरुः ॥
तपःसखी मे दयिता विशालाक्षी यशस्विनी ॥३॥

प्रश्नद्वयेन रमणाह्वयं विश्वहितं मुनिम् ॥
अभ्यगच्छददुष्टाङ्गी निक्षिप्तेन मुखे मम ॥४॥

इदं चतुष्कमेकवाक्यम् । विशालाक्षी प्रश्नद्वयेन मुनिमभ्यगच्छत् । विशालाक्षीति सुगृहीतनामधेयाऽस्मदाचार्यभार्या वक्ष्यमाणेन प्रश्नद्वयेन सन्देहध्वंसाभ्यर्थनया महर्षेरुपस्थानमकरोदित्यर्थः । न स्वयं पृष्टवती । मम मुखे निक्षिप्तेन प्रश्नद्वयेनेत्याह, स्वभर्तुर्ग्रन्थकृत आचार्यस्य द्वारा महर्षिमपृच्छत् । स्वगतसन्देहं पत्ये निवेद्य तं प्रश्नकरणाय प्रार्थितवती । तस्मात् प्रश्नस्य भावो भार्यायाः शब्दस्तु भर्तुरित्यर्थः । अस्य प्रश्नस्य लोकहितविषयत्वात् मुनिं विश्वहितमिति विशिनष्टि । रमणाह्वयं रमणनामकं मुनिविशेषणम् । महर्षेर्विश्रुते रमणनाम्नि, कुतो रमणाह्वयमिति यः कश्चनेव रमणनामा महर्षिरिति कथितम्? रमणपदस्य पतिपर्यायत्वात् पतिं मुनिमित्यर्थो माभूदिति तन्निवारणाय रमण आह्वयो नामधेयमस्य मुनेरित्युक्तम् । विशालाक्षीं विशिनष्टि । अदुष्टाङ्गी लक्षण-

सम्पन्ना । अत्रीणामन्वयज्योत्स्ना आत्रेयसगोत्राणां कुले जाता । वसिष्ठानां कुलस्नुषा पत्युः कौण्डिन्यसगोत्रत्वात् । 'धीरस्य ब्रह्मवेदिनो महादेवस्य जननी' अस्मदाचार्यपुत्रस्य महादेवस्य विशेषणद्वयोपादानं तज्जनन्याः माहाभाग्यद्योतनार्थम् । ब्रह्मवेदित्वं नेह ब्रह्मविद्वरिष्ठत्वपरं, किं तु ब्रह्मस्वरूपविचारशीलत्वपरं, ब्रह्म परं वस्तुस्वरूपं वेदितुं ज्ञातुं शीलमस्येति ब्रह्मवेदी, उपपद्यते चैतत् । दशवर्षदेशीयो बाल एवायुष्मान् महादेवो भगवन्महर्षेरनुग्रहबलात् तत्सन्निधौ आत्मस्वरूपलाभोपायमुपदेशं किल प्राप्तवान् । वयोविद्यावृद्धेषु मध्ये धीरतयाऽऽत्मसम्प्राप्तिदायिनीं श्रीमहर्षेर्वाचं विचारयन् सार्तब्रह्मोपदेशात् प्रागेव प्राप्तब्रह्मोपदेशोऽभूदिति विश्रुतमेवैतत् । एवं धीरस्य ब्रह्मवेदिनो महादेवस्य माता विशालाक्षी । पुनस्तां विशिनष्टि । पुरन्ध्रीणां प्रतिमानं, स्त्रीणां निदर्शनं स्वचर्ययेत्यर्थः । लोकसेवाव्रते स्थिता, लोकक्षेमाय देवतानुग्रहसम्पादकजपादिनियमे संस्थिता । ब्रह्मादिविबुधस्तुतां महतीं विद्यां बिभ्राणा, षोडशीं श्रीविद्यां महाविद्यामाहुः । तां दधती श्रीविद्योपासिकेति यावत् । विन्ध्यतो दक्षिणे तारिण्याः शक्तेरादिमा गुरुः, तारा नीलसरस्वती एकजटेति त्रिविधोपास्यमन्त्रमूर्तिर्दशमहाविद्यासु तारा तन्त्रशास्त्रेषु विश्रुता । विदेहेष्वेषा महाविद्या प्राप्तप्रचरा भवति । काश्मीरेष्वपीत्येके । स्त्रीगुरुपरम्परागतेयमिति सम्प्रदायः । जातस्य शिशोः पुण्याहपूर्वमेव माता स्वयं अन्यस्त्रीगुरुद्वारा वा नीलसरस्वतीबीजाक्षरत्रयं मधुमिश्रेण वचाभस्मना जातस्य जिह्वायां लिखति । एवं आजन्मनो मन्त्रपूते रसनारङ्गे सोल्लासा नृत्यति सरस्वती । एवमेव विशेषतः काश्मीरेषु सारस्वतवैभवज्वलिताः कवयः पूर्वे इति कथयन्ति । अस्मदाचार्याणी देवी तु विदेहदेशात् मैथिल्याः स्त्री-गुरोः इमां विद्यां प्राप्य दक्षिणदेशमागता । तस्माद्विन्ध्याचलाद्दक्षिणदेशेऽविदितपूर्वायास्तारामहाविद्यायाः इयमादिमा गुरुरित्युक्तम् । तपःसखी मे दयिता तपसि तिष्ठति आचार्ये स्वयमपि तत्सहचरी तत्साहचर्यरूपं पतिव्रताधर्मं तपस्तपस्यन्तीत्यर्थः । दयिता प्रिया भार्या । यशस्विनी ईदृशमहानुभावेन भर्तृमती ॥

अथ श्लोकद्वयेन प्रश्नद्वयमाह—

आत्मस्थितानां नारीणा मस्ति चेत् प्रतिबन्धकम् ॥
गृहत्यागेन हंसीत्वं किमु स्याच्छास्त्रसम्मतम् ॥५॥

आत्मस्थितानां नारीणां लब्धात्मस्वरूपनिष्ठानां स्त्रीणां प्रतिबन्धकमस्ति चेत् विघ्नबाहुल्यमस्ति चेत् गृहत्यागेन प्रव्रजनेन हंसीत्वं सन्न्यासिनीत्वं शास्त्रसम्मतं किमु? महर्षिभक्तायाः महर्षिवागेव परमं प्रमाणं शास्त्रम् । न स्त्री स्वातन्त्र्यमर्हतीति स्मार्तेन शास्त्रेण सर्वथा स्वातन्त्र्ये निषिद्धे, अयं सन्देहः । भगवान्महर्षिश्च धर्मशास्त्रपरिशीलनेनोत्तरं दद्यादिति न पृष्टम् । यत्परमं श्रेयः परमधर्माविरुद्धं चान्तर्दृष्ट्या पश्यति, तदेवोपदिशति, तस्मात् देशविशेषे कालविशेषे वा प्राप्तप्रचारेभ्यश्चातुर्वर्ण्य-चातुराश्रम्य-व्यवस्थापक-धर्मशास्त्रेभ्योऽपि बलवत्तरं श्रीमहर्षिवाचः प्रामाण्यं जानन्त्येव महामनाः पृच्छति । अथ च स्त्रीणां चतुर्थवर्णानामिव तुरीयाश्रमनिषेधः स्मर्यते । तस्मादेष प्रश्नः कृतः ॥

अथ प्रथमप्रश्नानुबन्धी द्वितीयः प्रश्नः—

जीवन्त्या एव मुक्ताया देहपातो भवेद्यदि ॥
दहनं वा समाधिर्वा कार्यं युक्तमनन्तरम् ॥६॥

जीवन्त्या एव मुक्तायाः विगलितदेहात्मबन्धायाः जीवन्मुक्तायाः स्त्रियो देहपातो भवेद्यदि पाञ्चभौतिके देहे पञ्चतां याते, अनन्तरं कार्यं देहस्य दहनमग्निसंस्कारो वा समाधिः खननं वा युक्तम् । समाधिशब्दस्योपचारात् खनने रूढिः । विधिपूर्वकं सम्प्रदायानुसारेण स्वीकृततुरीयाश्रमाणां पुरुषाणां देहपाते देहस्य खननं विधीयमानं स्मर्यते । अयं च विधिरजीवन्मुक्तस्यापि सन्न्यासाश्रमिणः पुरुषस्य । किमुत परमार्थतस्तुरीयाश्रमिणो विषये? तस्मात् जीवन्मुक्तस्य पुरुषस्य देहपाते खननमेवेति नात्र संशयः प्रष्टव्यः । किं जीवन्मुक्तस्त्रियोऽपि देहपाते पुरुषस्येव विधिर्युक्त इति पृच्छा ॥

प्रश्नद्वयमिदं श्रुत्वा भगवानृषिसत्तमः ॥
अवोचन्निर्णयं तत्र सर्वशास्त्रार्थतत्त्ववित् ॥७॥

सर्वशास्त्रार्थतत्त्ववित् सम्प्रदायानुसारेण गुरुमुखादनधीतशास्त्रजालोऽपि सर्वेषां शास्त्रविधीनां परमपुरुषार्थभूतं परं निःश्रेयसमेव प्रयोजनमिति तत्त्वं शास्त्रार्थहृदयं

ज्ञातवान् भगवानृषिसत्तमो महर्षिरिदं प्रश्नद्वयं श्रुत्वा तत्र विषये निर्णयमवोचत् । संशयच्छेदकं निश्चितमुत्तरमदात् । तच्च त्रिभिः श्लोकैर्वक्ष्यते—

**स्वरूपे वर्तमानानां पक्वानां योषितामपि ॥**
**निवृत्तत्वान्निषेधस्य हंसीत्वं नैव दुष्यति ॥८॥**

स्वरूपे वर्तमानानामात्मनिष्ठासिद्धानां पक्वानां ज्ञानवृद्धानां योषितामपि, पुरुषाणामिव स्त्रीणामपि हंसीत्वं परिव्राट्त्वं नैव दुष्यति, न दोषाय भवति । कुतः? निषेधस्य निवृत्तत्वात् "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुत्यनुग्रहो विरक्ते पुरुष इव विरक्तायां स्त्रियामपि उपपद्यते । वस्तुतस्तु ज्ञानवृद्धाः परिपक्वाः पुरुषाः स्त्रियो-वा श्रौतैः स्मार्तैर्वा विधिनिषेधैर्न बध्यन्ते, तेषामत्याश्रमित्वात् सर्वबन्धविनिर्मुक्तेश्च ॥

**मुक्तत्वस्याविशिष्टत्वा द्बोधस्य च वधूरपि ॥**
**जीवन्मुक्ता न दाह्या स्यात् तद्देहो हि सुरालयः ॥९॥**

मुक्तत्वस्य बोधस्य चाविशिष्टत्वात् मोक्षो ज्ञानं च स्त्री-पुरुषयोरुभयोरपि तुल्ये । तत्र न कोऽपि विशेषः । ज्ञानान्मुक्तिर्ज्ञानमेव मुक्तिरिति आत्मवित्सिद्धान्ते स्थिते, मुक्तत्वस्य बोधस्य चेत्युक्त्या उभयोर्भेदो नाभिप्रेतः । उभयोरकिञ्चित्करं वा भेदं मन्यमानानामनुग्रहाय चकारः प्रयुक्तः । स्त्री-पुरुषयोर्ज्ञानोदये भेदाभावात् जीवन्मुक्ता वधूरपि स्त्री च न दाह्या स्यात्, देहपाते देहो न दाह्यः । हि यतः तद्देहः सुरालयो देवालयो भवति । जीवन्मुक्तमहिमानुवर्णनपराणि निगमागमपुराणेतिहासवचनानि जीवन्मुक्तदेहं देवालयमुद्घोषयन्ति ॥

**ये दोषा देहदहने पुंसो मुक्तस्य संस्मृताः ॥**
**मुक्तायाः सन्ति ते सर्वे देहदाहे च योषितः ॥१०॥**

मुक्तस्य पुंसो देहदहने ये दोषाः संस्मृताः शास्त्रेषूक्ताः, ते सर्वे दोषाः मुक्तायाः योषितो देहदाहेऽपि सन्ति जीवन्मुक्तस्त्रीदेहदहनेऽपि सन्तीत्यर्थः ॥

भगवन्महर्षेर्मातुर्देहपाते तस्याः परमार्थहंसीत्वं स्पष्टमभूदस्मदादीनाम् । यतः श्रीभगवानेव देव्यास्तस्याः समाधिसम्पन्नायाः शरीरगोपनाय कृतप्रसादोऽभूत् । तदिदं श्रीरमणधर्मशास्त्रं विजयतेतरां विजयतेतराम् ॥

**एकविंशेऽह्नि गीतोऽभू दयमर्थो मनीषिणा ॥**
**अधिकृत्य ज्ञानवतीं रमणेन महर्षिणा ॥११॥**

प्रागुक्त एवाब्दे मासि एकविंशेऽह्नि (१९१७-८-२१) मनीषिणा महर्षिणा रमणेन ज्ञानवतीं हंसीमधिकृत्य समुद्दिश्यायमर्थो गीतोऽभूत् । परिव्राट्त्वे पुरुषैः सह स्त्रीणां समानाधिकारप्रतिपादकोऽयं तात्त्विकोऽर्थो विवृतोऽभूत् ॥

॥ इति त्रयोदशोऽध्यायः ॥

# ॥ चतुर्दशोऽध्यायः ॥

अस्मिन्नध्याये जीवन्मुक्तिविचारः क्रियते—

**निशायामेकविंशेऽह्नि भारद्वाजो विदां वरः ॥**
**प्राज्ञः शिवकुलोपाधि- वैदर्भो वदतां वरः ॥१॥**

एकविंशेऽह्नि दिवसे, निशायां रात्रौ भारद्वाजो भरद्वाजसगोत्रो विदां वरोऽभिज्ञानां श्रेष्ठो वदतां वरो वाग्मिनामुत्तमः प्राज्ञो धीमान् शिवकुलोपाधिः शिवकुलमुपाधिः कुलनामधेयं यस्य स वैदर्भः परिपृष्टवानित्युत्तरश्लोकेन योज्यम् ॥

**जीवन्मुक्तिं समुद्दिश्य महर्षिं परिपृष्टवान् ॥**
**अथ सर्वेषु शृण्वत्सु महर्षिर्वाक्यमब्रवीत् ॥२॥**

जीवन्मुक्तिं जीवतो देहस्थस्य मुक्तिं देहात्मबन्धविमोचनरूपां समुद्दिश्याधिकृत्य महर्षिं भगवन्तं रमणं परिपृष्टवान् बहुधा विचार्याप्राक्षीद्वैदर्भ इति शेषः । अथ प्रश्न-श्रवणानन्तरं सर्वेषु ग्रन्थकृत्प्रभृतिषु भक्तेषु सन्निहितेषु शृण्वत्सु, महर्षिणा वक्ष्यमाणे प्रतिवचने सावधानं निहितकर्णेषु महर्षिर्भगवान्वाक्यमब्रवीत् । प्रत्युत्तरं पञ्चदशभिः श्लोकैः आसमाप्तेरध्यायस्य जीवन्मुक्तिविषयमुपन्यासं निबद्धवान्ग्रन्थकार इत्यवधेयम् ॥

शास्त्रीयैर्लौकिकैश्चापि प्रत्ययैरविचालिता ॥
स्वरूपे सुदृढा निष्ठा जीवन्मुक्तिरुदाहृता ॥३॥

शास्त्रीयैः शास्त्रविचारजन्यैर्लौकिकैर्लोकसम्बन्धिभिश्चापि प्रत्ययैर्ज्ञानैरविचालिता अबाध्यमाना सैव स्वरूपे आत्मस्वरूपे वस्तुनि सुदृढा सुस्थिरा निष्ठा जीवन्मुक्तिरुदाहृता । जीवतो यस्य महापुरुषस्य चिज्जडग्रन्थिभेदाद्देहात्माभिमानविनष्टिः तस्य देहात्मबन्ध-मोक्षणे च सम्पद्यमाने, सिद्धा स्वात्मस्वरूपनिष्ठा या शास्त्रीयैः संस्कारैः लौकिकवास-नाभिर्वा न बाध्यते । ज्ञानान्मुक्तौ हि वासनाक्षयो निर्लेपत्वं च सिद्धे भवतः ॥

मुक्तिरेकविधैव स्यात् प्रज्ञानस्याविशेषतः ॥
शरीरस्थं मुक्तबन्धं जीवन्मुक्तं प्रचक्षते ॥४॥

प्रज्ञानस्याविशेषतो मुक्तिरेकविधैव स्यात् । एकमेव मुक्तिस्वरूपम् । ज्ञानादेव मुक्तेः । तस्मिन् ज्ञानस्वरूपे भेदाभावात्तस्य सदा सर्वत्रैकरूपत्वाच्च । मुक्तौ भेदं मन्वानानामाशयः प्राग्व्याख्यातः । तथाऽहंधीविनष्टिरेव मुक्तिरिति महर्षिभिः शतशो अभिहितमन्यत्र व्याख्यातं च । उत्तरार्धं स्पष्टम् ॥

मुक्तबन्धस्य पुंसो देहे सत्यपि सोऽशरीर एव भवति । तथा चामनन्ति वाजस-नेयिनः, "तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" इति, अयं भावः । अहिनिर्ल्वयनी सर्प-निर्मोकस्तदीया त्वक् वल्मीके मृता निश्चेतना प्रक्षिप्ता सती अहिनाम्ना न व्यवह्रियतेऽ-निष्टत्वाद्दूरापास्तत्वाच्च । एवं मुक्तबन्धस्य पुंसः शरीरं मृतमिव भवति । स तु इहैवामृतो

भवतीति । "तमेवं विद्वानमृत इह भवति" इति च श्रुतिघोषो भवति । न केवलं स्थूलशरीरमेव जीवतो मुक्तस्य मृतवद्भवति, आत्मलाभसमकालमेव देहत्रयस्य बाधितत्वात् । एवं मुक्तेरेकविधत्वप्रतिपादनमुपपन्नम् ॥

ब्रह्मलोकगतो मुक्तः श्रूयते निगमेषु यः ॥
अनुभूतौ न भेदोऽस्ति जीवन्मुक्तस्य तस्य च ॥५॥

यः पुरुषो ब्रह्मलोकगतो ब्रह्मणः सायुज्यं गच्छतीति प्रतिपादयत्सु निगमेषु वेदेषु श्रूयते तस्य ब्रह्मलोकगतस्य पूर्वोक्तजीवन्मुक्तस्य चानुभूतौ नास्ति भेदः ॥

प्राणाः समवलीयन्ते यस्यात्रैव महात्मनः ॥
तस्याप्यनुभवो विद्व- न्नेतयोरुभयोरिव ॥६॥

विद्वन्! यस्य महात्मनोऽत्र इहैव प्राणाः अनुत्क्रान्ताः समवलीयन्ते स्वात्मन्येव लयं गच्छन्ति, तस्यापि एतयोः पूर्वोक्तयोर्जीवन्मुक्तब्रह्मलोकगतयोरिवानुभवो भवति । इह जीवन्नेव यो मुक्तः, यश्च ब्रह्मलोकगतो मुक्तः, तयोरुभयोरप्येकरूप एव मोक्षः । ज्ञानस्यैकरूपत्वादनुभूतिश्चैकैवेति पूर्वं प्रतिपादितम् । इहान्यं तृतीयं मुक्तपुरुषं प्रकृत्य तस्याप्यनुभवः पूर्वोक्तयोरनुभवान्न भिद्यत इत्याह । क्वचिज्जीवदशायामभुक्तबन्धस्यापि पुरुषस्य आयुरन्ते शरीरयात्राविरतिसमये पूर्वसुकृतपरिपाकात् ईश्वरानुग्रहात् सद्गुरुकटाक्षस्पर्शदीक्षाविलासाद्वा प्राणा अनुत्क्रम्य ब्रह्मण्यात्मस्वरूपे लयं गच्छन्ति । तादृशमुक्तपुरुषस्यापि स एवानुभवो यो ब्रह्मलोकगतस्य इहैव जीवन्मुक्तस्य चोक्तः ॥

अत्र विषयेऽस्माकमायुष्काल एव निदर्शनं दृष्टम् । महाभाग्यात् भगवतः श्रीरमणस्य जननी सौन्दर्याम्बिका देहावसानसमयेऽनुत्क्रान्तप्राणा अमृतीभूय प्राप्तशरीरसमाधिकाऽद्यापि श्रीमातृभूतेश्वरालयाधिष्ठात्री जेजीयते ॥

पूर्वाध्याये तद्देहो हि सुरालय इत्युक्तम् । तद्वचनजन्मनः पञ्चवर्षेभ्यः परं देव्या सुन्दराम्बया परमार्थमहासमाधिसम्पन्नया स्वदेहसुरालयत्वविजृम्भकं मातृभूतेश्वरालयं

समधिष्ठातुमारब्धमिति शिवम् ॥

साम्यात्स्वरूपनिष्ठाया बन्धहानेश्च साम्यतः ॥
मुक्तिरेकविधैव स्याद् भेदस्तु परबुद्धिगः ॥७॥

स्वरूपनिष्ठायाः साम्यात्पूर्वोक्तानां त्रिविधानां मुक्तपुरुषाणामात्मस्वरूपावस्थितेरेकरूपत्वात् हेतोः, बन्धहानेर्जडचेतनग्रन्थिभेदात्मक-देहात्मबन्धविमुक्तेश्च साम्यात् समत्वाद्धेतोश्च मुक्तिरेकविधैव स्यात् । यदीह जीवत एव मुक्तस्य, उत्क्रम्य ब्रह्मलोके मुक्तस्य, अन्तकालेऽनुत्क्रम्य स्वरूपे लीनप्राणस्य च भेद एव न स्यात्, कथमयमुत्क्रान्त्यनुत्क्रान्तिद्वारको मोक्षो विशिष्य व्यवह्रियते शास्त्रेषु? भेदस्तु परबुद्धिग इत्याह । मुक्तौ भेदाभावात् मुक्तपुरुषस्य मुक्तिभेदबुद्धिर्न भवति । विद्वदितरबुद्धिगत एवायं भेद इति फलितम् ॥

मुक्तो भवति जीवन्यो महात्माऽऽत्मनि संस्थितः ॥
प्राणाः समवलीयन्ते तस्यैवात्र नरर्षभ ॥८॥

नरर्षभ नरश्रेष्ठ! यो महात्मा ज्ञानवृद्धः आत्मनि संस्थितः स्वरूपनिष्ठो जीवन्नेव देहबन्धान्मुक्तो भवति, तस्यैव जीवन्मुक्तस्य, न तु उत्क्रम्य, अमुत्र मुक्तस्य, 'अत्र प्राणाः समवलीयन्ते' देहस्थाः प्राणाः आत्मनि लीयन्ते, नोत्क्रान्ता भवन्ति । जीवन्मुक्तबन्धोऽपि क्वचिद्देहावसानेऽनुत्क्रान्तप्राणः स्वात्मन्येव समाधिसम्पन्नो भवतीति प्रागुक्तम् । किमुत जीवन्मुक्तविषये? सोऽप्यनुत्क्रान्तप्राण एव स्वात्मनि लयं यातीति सिद्धम् ॥

जीवन्मुक्तस्य कालेन तपसः परिपाकतः ॥
स्पर्शाभावोऽपि सिद्धः स्या द्रूपे सत्यपि कुत्रचित् ॥९॥

जीवन्मुक्तस्य पुरुषस्य कुत्रचित्क्वचित् न सर्वस्यापि जीवन्मुक्तस्येति भावः, रूपे देहरूपे सत्यपि स्पर्शाभावोऽपि सिद्धः स्यात् । अपिशब्देन अविद्वदाश्चर्यकरीयं सिद्धि-

यद्देहे चक्षुर्ग्राह्ये सत्यपि स स्प्रष्टुं न शक्यत इति बोध्यम् । कथमीदृशी सिद्धिर्भवति जीवन्मुक्तस्य? न केनापि योगसाधनविशेषेण, किंतु 'कालेन तपसः परिपाकतः', सिद्धात्मनिष्ठस्यायत्नसिद्धं सहजं हि तपः । तस्य कालेन परिपाकादीदृशी कायसिद्धिः स्यात् । 'नालस्यं सहजस्थितौ', 'नित्येन तपसा भवेत्पाकः क्षणे क्षणे', 'परिपाकेन काले स्युः सिद्धयः' इत्याद्या एकादशाध्याये प्रोक्ताः । तत्र ज्ञानस्य सिद्धीनां च सामरस्यमुपपादितं द्रष्टव्यम् ॥

'ज्ञानेनैव विना योगो न सिद्ध्यति कदाचन' इति योगिन एव प्राहुः । यद्यपि, ईदृश्यः सिद्धयो न कदाऽपि जीवन्मुक्तस्य लक्षणं भवितुमर्हन्तीति सिद्धं, तथाऽपि ज्ञानप्रभावकथनावसरे सर्वासां सिद्धीनामुदयलयस्थानं ज्ञानमिति इह सिद्धीनां प्रयुक्ति-र्बोध्या ॥

भूयश्च परिपाकेन रूपाभावोऽपि सिद्ध्यति ॥
केवलं चिन्मयो भूत्वा स सिद्धो विहरिष्यति ॥१०॥

पुनश्च परिपाकवशान्न केवलं स्पर्शाभावो देहस्य रूपाभावोऽपि सिद्धः स्यादिति पूर्वार्धं विशदम् । तादृशः सिद्धश्चिन्मयोऽशरीरः केवलं चिन्मयदेहो वा विहरिष्यति । सर्वेषु लोकेषु कामचारोऽस्येति उत्तरत्र वक्ष्यति ॥

शरीरसंश्रयं सिद्ध्यो- र्द्वयमेतन्नरोत्तम ॥
अल्पेनापि च कालेन देवतानुग्रहाद्भवेत् ॥११॥

शरीरसंश्रयं शरीरं संश्रय आश्रयो यस्य तदेतत् सिद्ध्योर्द्वयं पूर्वोक्तं शरीरविषयकं स्पर्शाभावरूपाभावात्मकसिद्धिद्वयं अल्पेनापि च कालेन न दीर्घेण कालेन तपःपरिपाक-वशात्, किंतु देवतानुग्रहाद्भवेत् । कथमिहेश्वरतुल्ये जीवन्मुक्तपुरुषे देवतानुग्रह उप-पद्यते? प्रकरणाज्जीवन्मुक्तमधिकृत्य ह्येतदुक्तम्, न केवलं कायसिद्धिमधिकृत्य । ब्रूमः । नेह जीवन्मुक्तमधिकृत्य, किंतु तद्देहमुद्दिश्य प्रोक्तम् । भूमिष्ठं पाञ्चभौतिकं शरीरं

यथाविधि व्यापारयन्तः कार्येष्वधिकृताः सर्वेश्वरपरतन्त्रा देवा निग्रहानुग्रहशक्ताः ईश्वराज्ञां निर्वाहयन्ति । 'सिद्धयो द्विविधाः प्रोक्ता' इत्यारभ्य 'स्वातन्त्र्यादीश्वरप्रियाः' इति प्रागुदाहृतम् । जीवन्मुक्तशरीरमेव युक्तं पात्रं भवति तादृशसिद्धिप्रददेवतानुग्रहायेति विवक्षा । एवं कार्यसिद्धिप्रसङ्गेन जायेत वाऽऽश्चर्यबुद्धिस्तया भ्रमश्च स्याद्वा । तन्निवारणाय मुक्तौ भेदं मा मंस्था इति पुनः स्मारयति ॥

भेदमेतं पुरस्कृत्य तारतम्यं न सम्पदि ॥
देहवानशरीरो वा मुक्त आत्मनि संस्थितः ॥१२॥

'एतं भेदं पुरस्कृत्य' उक्तं सिद्धिद्वयकृतं भेदमपेक्ष्य 'सम्पदि तारतम्यं न' मुक्तौ न्यूनाधिकताभेदो न भवतीत्यर्थः । सम्पत्पदं मुक्तिवाचकम् । 'परं ज्योतिरभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष' इति श्रुतिर्मुक्तिं सम्पदमाह । बादरायणसूत्रेऽपि तदेवोदाहृतं, 'सम्पद्याविर्भावः स्वेन शब्दात्' इति । तस्मादशरीरः सशरीरो वा आत्मनिष्ठो मुक्तपुरुषो भवतीत्युत्तरार्धस्य भावः स्पष्ट उपपादनमिह नापेक्षते ॥

नाडीद्वारार्चिराद्येन मार्गेणोर्ध्वगतिर्नरः ॥
तत्रोत्पन्नेन बोधेन सद्यो मुक्तो भविष्यति ॥१३॥

नाडीद्वारा सुषुम्नानाडीद्वाराऽर्चिराद्येन मार्गेण देवयानाख्येन, ऊर्ध्वगतिरूर्ध्वा गतिरुत्क्रान्तिर्यस्य स नरः पुरुषस्तत्र लोकान्तरे उत्पन्नेनोदितेन बोधेनात्मस्वरूपज्ञानेन सद्यो मुक्तो भविष्यति । उत्क्रान्तस्य देवयानाधिकारिणः ऊर्ध्वगतिकस्य लोकान्तरे ज्ञानोदयः स्यात्, तस्मान्मुक्तो भवतीति भावः ॥

उपासकस्य सुतरां पक्वचित्तस्य योगिनः ॥
ईश्वरानुग्रहात्प्रोक्ता नाडीद्वारोत्तमा गतिः ॥१४॥

उपासकस्य स्वरूपानुसन्धानपरस्य ईश्वरध्यानपरस्य वा सुतरामत्यन्तं पक्वचित्तस्य सत्त्वशुद्धिसम्पन्नस्य योगिनो योगनिष्ठस्याजीवन्मुक्तस्यापीश्वरानुग्रहान्नाडीद्वाराऽमृतनाडी-

द्वारा हृदयात्प्रस्थाय मूर्धानमभिनिःसृतया द्वारा उत्तमा गतिर्ब्रह्मलोकप्राप्तिः प्रोक्ता श्रुतिष्विति भावः । तथा च श्रुतिः, 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' इति ॥

सर्वेषु कामचारोऽस्य लोकेषु परिकीर्तितः ॥
इच्छयाऽनेकदेहानां ग्रहणं चाप्यनुग्रहः ॥१५॥

तद्यथेह कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयत इत्यारभ्य तेषां सर्वेषु लोकेषु कामचारो भवतीति । एवं सर्वेषु लोकेषु कामचारो मुक्तस्योर्ध्वगतिकस्य भवतीतीममेवार्थं पूर्वार्धेनाह । मुक्तपुरुषस्य तस्येच्छया साधनान्तरनिरपेक्षमनेकदेहानां ग्रहणं बहुदेहस्वीकरणसामर्थ्यं, अनुग्रहोऽन्याननुग्रहीतुं शक्तिश्च भवत इत्युत्तरार्धेनोक्तम् । अत्रापि श्रुतिः— स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा" इत्यादि भवति ॥

कैलासं केऽपि मुक्तानां लोकमाहुर्मनीषिणः ॥
एके वदन्ति वैकुण्ठं परे त्वादित्यमण्डलम् ॥१६॥

मुक्तानां लोकः शिवलोकः कैलास इति शैवाः, वैकुण्ठो विष्णुलोक इति वैष्णवाः, आदित्यमण्डलमिति वैदिकाः सौराश्च प्राहुः ॥

मुक्तलोकाश्च ते सर्वे विद्वन् भूम्यादिलोकवत् ॥
चित्रवैभवया शक्त्या स्वरूपे परिकल्पिताः ॥१७॥

विद्वन्! ते सर्वे मुक्तलोकाः पूर्वोक्ताश्चित्रवैभवया चित्रमद्भुतं वैभवं विभुत्वं प्राभवमिति यावत् यस्याः, तया शक्त्या भूम्यादिलोकवत्परिकल्पिता निर्मिताः । 'शक्त्युल्लासाद्वया सेयं सृष्टिः स्यादीशकल्पना' सर्वस्यामपि सृष्टावीशकल्पनया सिद्धायां, मुक्तपुरुषशरीरयात्राभूमिर्यो वा को वा भवतु लोकः, न तस्य लोकस्य कल्पनातीतत्वमुच्यते ।

यया विचित्रशक्त्या ईशकल्पनया लोकविशेषः सृज्यते, तया स कर्तुमिवाकर्तुमप्यन्यथा वा कर्तुं च शक्यते । तस्मान्नैव लोकसापेक्षा स्यात्सर्वत्रैकस्वरूपा मुक्तिर्या कल्पनातीता कीर्त्यते ॥

अथ न सृष्टो ब्रह्मलोको यं गत्वा न पुनरावर्तत इति चेत्, तत्र ब्रह्मैव लोको ब्रह्मलोक इति व्युत्पत्त्याऽर्थो बोध्यः । लोकशब्दो बृहत्त्वाखण्डत्वादावुपचर्यते । एवमिहैव जीवन्मुक्तस्यान्यलोकगतमुक्तस्य इहैव लीनप्राणस्य चात्मस्वरूपमेव सत्यलोको भवति । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' ॥

॥ इति चतुर्दशोऽध्यायः ॥

# ॥ पञ्चदशोऽध्यायः ॥

अथास्मिन्नध्याये श्रवणमनननिदिध्यासनानां परमार्थस्वरूपं निरूपयिष्यति ॥

श्रवणं नाम किं नाथ मननं नाम किं मतम् ॥
किं वा मुनिकुलश्रेष्ठ निदिध्यासनमुच्यते ॥१॥

इत्येवं भगवान्पृष्टो मया ब्रह्मविदां वरः ॥
द्वाविंशे दिवसे प्रात रब्रवीच्छिष्यसंसदि ॥२॥

श्रवणमनननिदिध्यासनानि मुमुक्षूणामात्मसाक्षात्कारसाधनत्वेन शास्त्रेषु विहितानि । तथा च श्रुतिः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति प्रसिद्धा । इमान्यधिकृत्य भगवन्तं महर्षिं ग्रन्थकारः पृष्टवान् । स च शिष्येषु सन्निहितेषु प्रत्युत्तरमदात् । प्रश्नोत्तरकालः १९१७–८–२२ ॥

वेदशीर्षस्थवाक्याना मर्थव्याख्यानपूर्वकम् ॥
आचार्याच्छ्रवणं केचि च्छ्रवणं परिचक्षते ॥३॥

वेदशीर्षस्थवाक्यानां वेदान्तवाक्यानां औपनिषदवचनानामिति यावत् । अर्थ-व्याख्यानपूर्वकं तात्पर्यं सविस्तरमाचार्याच्छ्रवणं गुरुमुखादाकर्णनं केचित् सम्प्रदायविदः श्रवणं परिचक्षते प्राहुः ॥

अपरे श्रवणं प्राहु राचार्याद्विदितात्मनः ॥
गिरां भाषामयीनां च स्वरूपं बोधयन्ति याः ॥४॥

विदितात्मन आचार्याद्भाषामयीनां गिरां च श्रवणं श्रवणं प्राहुर्याः स्वरूपं बोध-यन्तीति पदयोजना । भाषामयीनामित्यत्र मयटो विकारार्थः, भाषाभेदवतीनां गिरां श्रवणमित्यर्थः । आत्मज्ञानिनो गुरोर्मुखात् स्वभाषयोच्यमानानां आत्मस्वरूपबोधिकानां वाचां श्रवणं श्रवणमाहुः । एषां पक्षे द्विजेतराणामपि श्रवणाधिकारः सिद्ध्यति, वेदान्तवाक्यश्रवणे द्विजानामेवाधिकारत्वात् । श्रवणस्य मुख्यं प्रयोजनं तात्पर्यबोधः । स च स्वभाषया सुष्ठु जायते ॥

श्रुत्वा वेदान्तवाक्यानि निजवाक्यानि वा गुरोः ॥
जन्मान्तरीयपुण्येन ज्ञात्वा वोभयमन्तरा ॥५॥

अहंप्रत्ययमूलं त्वं शरीरादेर्विलक्षणः ॥
इतीदं श्रवणं चित्ता च्छ्रवणं वस्तुतो भवेत् ॥६॥

गुरोराचार्याद्वेदान्तवाक्यान्युपनिषद्वाक्यानि आत्मस्वरूपबोधकानि निजवाक्यानि गुरुवाक्यानि वा श्रुत्वा, उभयमन्तरा वेदान्तवाक्यगुरुवाक्याभ्यां विनाऽपि जन्मान्तरीय-पुण्येन अतीतजन्माचरितसुकृतेन वा ज्ञात्वा विदित्वा अहंप्रत्ययमूलं उद्देश्यं, त्वं विधेयं, अहंप्रत्ययस्य अहमस्मीति वृत्तिरूपस्य प्रत्ययस्य मूलं आश्रयो यः स एव त्वं शरीरादेः

विलक्षणोऽसि शरीरादिव्यतिरिक्त इतीदं चित्ताच्छ्रवणं वस्तुतः श्रवणं भवेत् । अयं भावः । कदाचित् कस्यचित्पुण्यपुरुषस्य बहिर्गुरूपदेशनिरपेक्षं वेदान्तार्थबोधं विनैव च "न त्वं देहो न वाऽहङ्कार एतद्व्यतिरिक्तोऽहमेव त्वं" इत्येवमर्थाऽन्तर्वागुदेति । तस्या वाचः श्रवणमेव परमार्थश्रवणम् । इतरच्छ्रवणं शास्त्रोक्तं केवलं संस्कारदायकम् । चित्ताच्छ्रवणमित्यत्र चित्तपदमन्तरोपलक्षणं, बाह्यवाग्व्यावर्तनार्थं च । स्वात्मस्वरूपबोधिकेयमीदृश्यन्तर्वाणी कदाऽपि कस्यापि पुण्यपुरुषस्य श्रवणमुपगच्छति । भगवान् रमणोऽस्मत्परमाचार्यः श्रीमहर्षिरेवात्र निदर्शनं, योऽन्तःश्रुतिं दधानोऽहमेव त्वमित्यात्मस्वरूपादाह्वयन्तीं वाणीमनुसृत्य मूलस्थाने स्वयं प्रतिष्ठां प्रापत् ॥

गुरुमुखाच्छ्रवणमीदृशश्रवणाय कल्पत इत्याचार्यवाचो वेदान्तवाक्यश्रवणं 'श्रोतव्य' इति मुमुक्षोर्विधीयते । परमार्थश्रवणं तूक्तलक्षणं बोध्यम् ।

**वदन्ति मननं केचिच्छास्त्रार्थस्य विचारणम् ॥**
**वस्तुतो मननं तात स्वरूपस्य विचारणम् ॥७॥**

वेदान्तशास्त्रार्थस्य वस्तुस्वरूपप्रतिपादनपरस्य विचारणं मननमित्याहुः सम्प्रदायविद इति पूर्वार्धेनोक्तम् । वास्तविकं मननं तु स्वस्वरूपविचारणमित्युत्तरार्धेनोक्तम् । स्वरूपविचारस्तु शास्त्रविचारादन्य इति प्रथमाध्याये प्रतिपादितं, अन्यत्र च व्याख्यातम् । उपासननामाऽयं विचारः स्वरूपप्रापकः प्राग्व्याख्यातलक्षणो येन विना सिद्धिर्नैव स्यादिति प्रत्यपादि ॥

**विपर्यासेन रहितं संशयेन च मानद ॥**
**कैश्चिद्ब्रह्मात्मविज्ञानं निदिध्यासनमुच्यते ॥८॥**

मानद! मानं ददातीति मानदः तस्य सम्बोधनम् । अन्यान् मानयतीति हेतोः स्वयं माननीयः । अथवा मानं स्वाभिमानं द्यति खण्डयति, उच्छिन्नस्वाभिमान इति यावत् । कैश्चिच्छास्त्रज्ञैर्विपर्यासेन विपर्ययेणान्यथाग्रहणरूपेण विरोधेनेति यावत्, संशयेन सन्देहेन च रहितं विवर्जितं ब्रह्मात्मविज्ञानं ब्रह्मैवात्मा तस्य विज्ञानं निश्चयबुद्ध्यात्मकं

ज्ञानं निदिध्यासनमुच्यते । निदिध्यासनं, निपूर्वकस्य ध्यायतेर्दर्शनार्थात् सन्नन्तात् ल्युटि परे निदिध्यासनमिति रूपं सिद्धम् । निध्यातुमीषणं दिदृक्षणमिति यावत् ॥

विपर्यासेन रहितं संशयेन च यद्यपि ॥
शास्त्रीयमैक्यविज्ञानं केवलं नानुभूतये ॥९॥

यद्यपि विपर्यासेन संशयेन च रहितं तत्, तथाऽपि केवलं शास्त्रीयमैक्यविज्ञानमनुभूतये न भवतीति योजना । केवलं शास्त्रविचारजन्यं ब्रह्मात्मैक्यविज्ञानमनुभवाय न प्रभवतीति भावः ॥

संशयश्च विपर्यासो निवार्येते उभावपि ॥
अनुभूत्यैव वासिष्ठ न शास्त्रशतकैरपि ॥१०॥

अनुभवस्यैव सन्देहविपर्ययनिवारकत्वं, न शास्त्राणामिति भावः ॥

शास्त्रं श्रद्धावतो हन्यात् संशयं च विपर्ययम् ॥
श्रद्धायाः किञ्चिदूनत्वे पुनरभ्युदयस्तयोः ॥११॥

श्रद्धावतः पुरुषस्य संशयं विपर्ययं विरुद्धबोधं च शास्त्रं हन्यात् व्यपोहेदेव, श्रद्धायाः किञ्चिदूनत्वे श्रद्धा येन केनापि निमित्तेन दुर्बला भवेच्चेत् पुनस्तयोः संशयविपर्ययोरभ्युदय उद्भवो भवत्येवेति भावः ॥

एवं शास्त्रजन्यब्रह्मात्मविषयकनिश्चयज्ञानस्य अपर्याप्तिमुपपाद्य स्वाभिमतं निदिध्यासनं निरूपयति ॥

मूलच्छेदस्तु वासिष्ठ स्वरूपानुभवे तयोः ॥
स्वरूपे संस्थितिस्तस्मान्निदिध्यासनमुच्यते ॥१२॥

वासिष्ठ! तयोः संशयविपर्ययोर्मूलच्छेदः पुनरनुद्भवसाधकमुन्मूलनं त्वित्यर्थः स्वरूपानुभवे भवतीति शेषः । तस्मात्स्वरूपानुभवस्यैव सन्देहविपर्यासनिवारकत्वे प्रतिपाद्यमाने स्वरूपे संस्थितिः स्वात्मनिष्ठा निदिध्यासनमुच्यते, न तु शास्त्रजन्यनिश्चयबुद्धिः ॥

अत्र संशयः । स्वरूपस्थितिरात्मदर्शनान्नातिरिच्यते । निदिध्यासनं तु दिदृक्षैव न दर्शनम् । दिदृक्षया दर्शनं भवतीति चेत् सुबोधम् । दिदृक्षैव दर्शनमिति कथमुपपन्नं भवति? तस्मान्निदिध्यासनं साधनं निध्यानं सिद्धिरिति वक्तव्यम् । तर्हि तस्मिन्दृष्टे परावरे छिद्यन्ते सर्वसंशयाः इति सिद्धावेव संशयमूलोच्छेदः सम्भवति । कथं साधने निदिध्यासने संशयमूलोच्छेद उपपद्यते? न च स्वरूपानुभवे संशयच्छेद उक्तः। निदिध्यासनाद्धि तत् सिद्ध्यतीत्युक्तम् । तस्मात्कथमयं निध्याननिदिध्यासनयोरभेदाध्यवसायो वाच्यः?

अत्र ब्रूमः । दिदृक्षायां जातायां सद्यो दर्शनं भवति, प्रतिबन्धकाभावात्, साक्षात्क्रियमाणस्य वस्तुनः आत्मस्वरूपत्वेन नित्यसिद्धत्वात् । लोके तु द्रष्टृदृश्ययोर्दर्शनदर्शनेच्छयोश्च देशतः कालतश्चान्तरं वर्तते । स्वरूपविषये आत्मैव द्रष्टा, आत्मैव दर्शनविषयः, आत्मैव दर्शनवृत्तिर्दृष्टिश्च भवति । तस्माद्यदा वस्तुतः पुरुषस्यात्मकामता स्फुटा भवति तदा सद्य एवात्मसिद्धिर्भवतीति आत्मनि निदिध्यासननिध्यानयोरन्तरं नोपपाद्यते इति तात्पर्यम् । एवंलक्षणस्य निदिध्यासनस्य लाभायैव शुभं कर्म सच्छास्त्रविचारो वैराग्यमित्यादीनि साधनतया शास्त्राण्युपदिशन्ति ॥

बहिः सञ्चरतस्तात स्वरूपे संस्थितिं विना ॥<br>
अपरोक्षो भवेद्बोधो न शास्त्रशतचर्चया ॥१३॥

स्वरूपे संस्थितिं विना बहिः सञ्चरतोऽपरोक्षो बोधः शास्त्रशतचर्चया न भवतीति स्पष्टम् । शतशः शास्त्रविचारे कृतेऽपि, अन्तरनावृत्तचक्षुषो बहिर्मुखस्य साक्षात्कारपदवाच्योऽपरोक्षानुभवो बोधो न भवेत् । तस्माद्वास्तविकं निदिध्यासनं शास्त्रजन्यनिःसन्देहतारूपान्निदिध्यासनादन्यदिति सिद्धम् ॥

स्वरूपसंस्थितिः स्याच्चेत् सहजा कुण्डिनर्षभ ॥
सा मुक्तिः सा परा निष्ठा स साक्षात्कार ईरितः ॥१४॥

कुण्डिनर्षभ! कौण्डिन्येति सम्बोधनम् । स्वरूपसंस्थितिः स्वरूपनिष्ठा सहजा स्याच्चेत् प्राणिनः श्वसितवदयत्नसिद्धा भवेच्चेत् सा मुक्तिः । अन्यत् स्पष्टम् ।

॥ इति पञ्चदशोऽध्यायः ॥

## ॥ षोडशोऽध्यायः ॥

अथास्मिन्नध्याये भक्तिविचारः क्रियते ॥

अथ भक्तिं समुद्दिश्य पृष्टः पुरुषसत्तमः ॥
अभाषत महाभागो भगवान्रमणो मुनिः ॥१॥

अथ पुरुषसत्तमो महाभागो भगवान् रमणो मुनिः भक्तिं समुद्दिश्य पृष्टोऽभाषतेति वाक्यं स्पष्टम् । इह प्रष्टृनाम्नोऽश्रवणेऽपि नरश्रेष्ठेति सप्तमश्लोके सम्बोधनात् ग्रन्थकार एव प्रष्टा स्यादिति गम्यते । यतः सर्वेषु प्रश्नेषु क्रियमाणेषु, प्रतिवचनेषु दीयमानेषु च, आचार्यो वासिष्ठमुनिः सन्निहितोऽभूत् । अन्यो वा स्यात्प्रष्टा, भक्तिस्वरूपं निरूपयन्त्याः वाचो हि प्राधान्यम् ॥

आत्मा प्रियः समस्तस्य प्रियं नेतरदात्मनः ॥
अच्छिन्ना तैलधारावत् प्रीतिर्भक्तिरुदाहृता ॥२॥

समस्तस्य सर्वस्यापि जन्तोरात्मा प्रियः निजस्वरूपं प्रियं, आत्मन इतरन्न प्रियम् । अनात्मनि न प्रीतिरिति भावः । तैलधारावत् तैलस्य निरन्तरा धारेव, अच्छिन्नाऽविच्छिन्ना प्रीतिर्भक्तिरुदाहृता । "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्म-

नस्तु कामाय सर्वं प्रियं भवति" इति मैत्रेयीं प्रति याज्ञवल्क्यस्य वचनं सर्वस्यापि जन्मिनोऽनुभवसिद्धम् । सर्वस्याप्यात्मनि ह्यात्यन्तिकी प्रीतिर्दृश्यते । आत्मनोऽन्यस्मिन् पुत्रदारवित्तादौ या प्रीतिराभासते साऽप्यात्मार्थमेवेति बोध्या । विच्छेदरहिता प्रीतिर्भक्तेः स्वरूपमिति बोध्यम् । इदं च "सा परा प्रेमरूपा" इति नारदवचनेन सङ्गच्छते । यत्र नैरन्तर्येणात्यन्तिकत्वं, तस्या ह्येव प्रीतेः परत्वमुपपन्नं भवति ॥

आत्मनोऽन्यत्र प्रीतेरविच्छिन्नताया असम्भवात् अविच्छिन्नात्यन्तिकप्रेमरूपं भक्तिस्वरूपमुपपादितं आत्मविद्दृष्ट्या । सङ्गतं चेदं भगवत्पादानां वाक्येन "स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते । आत्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः" इति ॥

अथेदानीं भक्तज्ञानिनोः सत्यपि दृष्टिभेदे, सिद्धौ भेदो न विद्यत इत्याह ॥

**अभिन्नं स्वात्मनः प्रीत्या विजानातीश्वरं कविः ॥**
**जानन्नप्यपरो भिन्नं लीन आत्मनि तिष्ठति ॥३॥**

कविः क्रान्तदर्शी आत्मवित्पुरुष इति यावत् ईश्वरं परमात्मानं प्रीत्याऽविच्छिन्नया स्वात्मनोऽभिन्नं अनन्यं विजानाति । अपरो भक्तो भिन्नं जानन्नपि, ईश्वरः स्वात्मनोऽन्य इति विदन्नपि आत्मनि लीनस्तिष्ठति । स्वात्मनो भगवानन्यो यस्मै स्वेन भक्तिः प्रदर्श्यत इति ज्ञानेन भक्तो भगवन्तं स्वात्मनोऽन्यं भजते, अपि तु परप्रेमावेशनिर्वाहितेन स्वात्मदानेन तस्मिन्नात्मनि लयं गच्छति । एवमात्मानुसन्धानरूपया भक्त्या ज्ञानी ईश्वरात्मैक्ये तिष्ठति, ईश्वरात्मभेदबुद्ध्याऽऽरब्धया भक्त्या स्वात्मसमर्पणेनात्मन्येव लीनस्तिष्ठतीति भक्तिज्ञानमार्गिणोः सम्बन्धः प्रतिपादितः ॥

अथ पारमैश्वरं प्रेम स्वरूपप्रापकमित्याह ॥

**वहन्ती तैलधारावद्या प्रीतिः परमेश्वरे ॥**
**अनिच्छतोऽपि सा बुद्धिं स्वरूपं नयति ध्रुवम् ॥४॥**

या प्रीतिस्तैलधारावद्विच्छेदरहिता परमेश्वरे सर्वाधारे परमात्मनि वहन्ती प्रवहन्ती सर्वेश्वरविषया व्याप्रियमाणा भवतीति यावत् सा परा प्रीतिरनिच्छतोऽपि पुरुषस्यात्मस्वरूपप्रेप्साशून्यस्यापि इति यावत् 'बुद्धिं स्वरूपं नयति' आत्मस्वरूपं प्रापयति । ध्रुवं नात्र संशयः । कथं जिज्ञासया विनाऽपि स्वरूपप्राप्तिः शक्यते वक्तुम्? नौकया यद्रम्यं स्थलं प्रतिगम्यते तदजानन् गन्तुमनिच्छन्नपि पुरुषस्तमारूढश्चेत्, नौकायां गन्तव्यं स्थलं प्राप्तायां नौकास्थपुरुषश्च तत्प्राप्तो भवति । एवमिह निरन्तरं वहन्त्यां परप्रीतौ स्थितः परस्याः प्रीतेरास्पदं परमात्मस्वरूपं प्राप्नोति ॥

एवं या ज्ञानमार्गिणस्तीव्रजिज्ञासा, या च भक्तिमार्गिणः परा प्रीतिस्तदुभयमप्येकस्यैवात्मस्वरूपस्य सिद्धौ पर्यवस्यति । स्वरूपज्ञाने पर्यवसन्ना जिज्ञासा, स्वरूपलाभे तृप्ता भवति प्रीतिरित्यनयोः सिद्धौ न भेदः, साधनदशायामेव मतिभेदो भवतीत्युपपादितम् ॥

परिच्छिन्नं यदाऽऽत्मानं स्वल्पज्ञं चापि मन्यते ॥
भक्तो विषयिरूपेण तदा क्लेशनिवृत्तये ॥५॥

व्यापकं परमं वस्तु भजते देवताधिया ॥
भजँश्च देवताबुद्ध्या तदेवान्ते समश्नुते ॥६॥

यदा भक्त आत्मानं स्वात्मानं विषयिरूपेण परिच्छिन्नं गुणेन परिमाणेन बुद्ध्या शक्त्या च परिमितमिति यावत् स्वल्पज्ञं चापि अल्पज्ञानिनं ज्ञानस्यापि परिच्छिन्नत्वात्, मन्यते, तदा क्लेशनिवृत्तये परिच्छिन्नताकिञ्चिज्ज्ञताजन्यस्य अविद्यास्मितारागद्वेषाभिनिवेशात्मकस्य तापत्रयात्मकस्य वा दुःखस्य विनष्टये व्यापकं वस्तु विभुस्वरूपं देवताधिया देवताबुद्ध्या भजते सेवते । देवताबुद्ध्या भजँश्च व्यापकवस्तुस्वरूपे आत्मेतरत्वेन देवतादृष्टिं निधायोपासीनोऽपि तदेवात्मस्वरूपं अन्ते समश्नुते । भक्तस्य भक्तिर्भेदबुद्ध्याऽऽरब्धाऽपि तदेव स्वरूपं प्रापयति सिद्धौ ॥

देवताया नरश्रेष्ठ नामरूपप्रकल्पनात् ॥
ताभ्यां तु नामरूपाभ्यां नामरूपे विजेष्यते ॥७॥

नरश्रेष्ठ! देवताबुद्ध्या ईश्वरबुद्ध्या सेव्यमानायाः स्वरूपतो नामरहिताया अपि नामरूपप्रकल्पनात् शिवविष्ण्वादिनाम्नश्चन्द्रचूडचतुर्भुजत्वादिरूपस्य च कल्पनात् ताभ्यामुपासनार्थं कल्पिताभ्यां नामरूपाभ्यां नामरूपे विजेष्यते भक्त इति शेषः । नाम्ना रूपेण च उपास्यया देवतया यल्लक्ष्यते तत्परमं स्वरूपं लभते । नामरूपातीतस्य वस्तुनो लाभो नामरूपजयः । अनेन नामरूपात्मके जगति मग्नज्ञानो न भवतीति भावः । किंतु नामरूपात्मकस्य जगतोऽधिष्ठानं सर्वकारणं नामरूपरहितं वस्तुस्वरूपमेव तत्र पश्यति, न च नामरूपवशङ्गतो भवति ॥

भक्तौ तु परिपूर्णाया मलं श्रवणमेकदा ॥
ज्ञानाय परिपूर्णाय तदा भक्तिः प्रकल्पते ॥८॥

भक्तौ भजकस्य परप्रीतौ परिपूर्णायां सत्यां एकदा श्रवणमलं सकृच्छ्रवणं सिद्ध्यै पर्याप्तं भवति । तदा सा भक्तिः परिपूर्णाय ज्ञानाय प्रकल्पते, परिपूर्णा भक्तिः परिपूर्णज्ञानप्रदा भवति ॥

पूर्वं लीम आत्मनि तिष्ठतीत्युक्तम् । तत्र भक्तोऽजानन्नपि अनिच्छन्नपि स्वरूपे लीयते, स्वरूपं प्राप्नोतीत्युपपादितम् । तस्माद् ज्ञानगन्धहीनस्यापि भक्तिः स्वरूपप्रापिकेति फलितम् । इह तु सकृद्वा श्रवणात् परिपूर्णा भक्तिः परिपूर्णज्ञानप्रदा भवतीत्युक्त्वा, भक्तिज्ञानयोरेकलक्ष्यतां जानन्नेव भक्तः सिद्धो भवतीति प्रतिपादितम् ॥

सकृच्छ्रवणमलमिति तु उत्तमाधिकारिणः पक्वचित्तस्य ज्ञानमार्गिणः पूर्णभक्तेर्भक्तस्य चेति बोध्यम् । इतरेषामधिकारिणां तु आवृत्तयेऽसकृदुपदेशोऽवगतिपर्यन्तं साधनमिति शास्त्राण्याहुः ॥

धाराव्यपेता या भक्तिः सा विच्छिन्नेति कीर्त्यते ॥
भक्तेः परस्याः सा हेतु र्भवतीति विनिर्णयः ॥९॥

या भक्तिस्तैलधारावदविच्छिन्ना न भवति धाराव्यपेता सा विच्छिन्नेति कीर्त्यते । न सा पूर्णा भक्तिः, तथाऽपि अभक्तेः सा विशिष्यते । कुतः? परस्या भक्तेः सा हेतुर्भवतीति विनिर्णयः ॥ स्पष्टम् ॥

विद्यायामभिलषितायां अनक्षरात् साक्षरो विशिष्यते, साक्षरात्पठनपाठनपटुः, तस्मादपि विद्वान्, एवं परप्राप्ताविष्टायां भक्त्यभावाद्विच्छिन्नाऽपि भक्तिर्विशिष्टैव, सा हि सोपानं हेतुश्च भवत्युत्तमभक्तेः ॥

कामाय भक्तिं कुर्वाणः कामं प्राप्याप्यनिर्वृतः ॥
शाश्वताय सुखायान्ते भजते पुनरीश्वरम् ॥१०॥

कामायाभीष्टविशेषलाभाय भक्तिं कुर्वाणः ईश्वरं भजमानः 'कामं प्राप्याप्यनिर्वृतः' इष्टे सिद्धेऽपि तृप्तो भूत्वा भक्तेर्न विरमति । प्रत्युत, अन्ते शाश्वताय सुखाय नित्यानन्दाय पुनरीश्वरं भजते । येन केनापि निमित्तेन भक्तिर्जायेत चेत् सोत्तराय श्रेयसे भवेदिति भावः । तद्विशदयति ॥

भक्तिः कामसमेताऽपि कामाप्तौ न निवर्तते ॥
श्रद्धा वृद्धा परे पुंसि भूय एवाभिवर्धते ॥११॥

भक्तिः कामसमेताऽपि काममिश्रिता अत एव सव्याजा न शुद्धाऽपि, कामाप्तौ भक्तिप्रारम्भकनिमित्तस्याभीष्टस्य सिद्धौ न निवर्तते, किंतु परे पुंसि परमपुरुषे श्रद्धा वृद्धा वृद्धिं गता भूय एवाभिवर्धते ॥

वर्धमाना च सा भक्तिः काले पूर्णा भविष्यति ॥
पूर्णया परया भक्त्या ज्ञानेनेव भवं तरेत् ॥१२॥

क्रमेण पदयोजना । भूयोऽभिवृद्धिं गच्छन्ती भक्तिः काले पूर्णा भवति । ज्ञानेन यथा जननाम्बुधिं तरति ज्ञानाध्वगः, तथा परया भक्त्योक्तलक्षणया भक्तोऽपीति भक्तिज्ञानयोरात्मस्वरूपे सामरस्यं उपपत्तिश्च प्रत्यपादिषाताम् ॥

॥ इति षोडशोऽध्यायः ॥

# ॥ सप्तदशोऽध्यायः ॥

पञ्चविंशे तु दिवसे वैदर्भो विदुषां वरः ॥
प्रश्रयावनतो भूत्वा मुनिं भूयोऽपि पृष्टवान् ॥१॥

पञ्चविंशे दिवसे (१९१७–८–२५) विदुषां वरो वैदर्भः प्रश्रयावनतो विनयावनम्रो भूत्वा मुनिं महर्षिं भूयोऽपि पुनरपि पृष्टवान् । पूर्वं जीवन्मुक्तिमधिकृत्यापृच्छत् चतुर्दशाध्याये । इह च स एव प्रष्टा ॥

वैदर्भ उवाच—

क्रमेणायाति किं ज्ञानं किञ्चित्किञ्चिद्दिने दिने ॥
एकस्मिन्नेव काले किं पूर्णमाभाति भानुवत् ॥२॥

ज्ञानं किञ्चित्किञ्चित् क्षणशः कणशो दिने दिने क्रमेणायाति किम्? एकस्मिन्नेव काले सकृत् एकस्मिन् क्षणे भानुवत्पूर्णमाभाति किम्? यथा सूर्योदयस्तथा ज्ञानोदयः क्षणाद्भवति वेति प्रश्नः ॥

भगवानुवाच—

क्रमेणायाति न ज्ञानं किञ्चित्किञ्चिद्दिने दिने ॥
अभ्यासपरिपाकेन भासते पूर्णमेकदा ॥३॥

ज्ञानोदयः क्रमेण न भवति, किं तु अभ्यासपरिपाकेन एकदा पूर्णं भासत इति स्पष्टम् । कुतोऽयं अभ्यासेन परिपाकः स्यात् येन पूर्णं ज्ञानं भासते? अभ्यासश्च श्रवणाद्यावृत्तिरूपं साधनं, तेन यः परिपाकः सत्त्वशुद्धिसम्पादको भवति, तेन पूर्णं ज्ञानमेकदा भासते । नेह साधनेन साध्यं ज्ञानमुक्तं, ज्ञानस्य नित्यसिद्धत्वेन साध्यत्वानुपपत्तेः । यथाऽभीप्सिते सुवर्णलक्षे कणशः कणशः सम्पाद्यमानं सुवर्णं एकदा पूर्णं लक्षं भवति, तथा ज्ञानमपि श्रवणाद्यावृत्तिबलात् क्रमेणोपचीयमानं एकदा पूर्णं भवतीति चेन्मैवं, कृतकस्य वस्तुनः साध्यत्वे साधुरेवोदाहृतो दृष्टान्तो, नित्ये वस्तुनि स नोपपद्यते, ज्ञानमेव हि स्वरूपं सिद्धस्य वस्तुनः । सिद्धं चेद् ज्ञानस्वरूपं वस्तु, कथमभ्यासस्तल्लाभहेतुर्भवति? को नाम प्रदीपेन प्रभाकरमीक्षितुं काङ्क्षेत्? बाढम् । अत एवाभ्यासेन परिपाको भवतीत्युक्तं, न तु परिपाकः साधयति ज्ञानमिति । अस्त्वेवं परिपाकः सिद्धं वस्तु न साधयेदिति । किंलक्षणस्तर्हि परिपाको येन निष्पन्नेन पूर्णं ज्ञानं भासते? आदर्शस्य नैर्मल्यसम्पादक इव संस्कारोऽन्तःकरणपरिणामविशेषसाध्यः साहङ्कारवृत्त्युपसंहाररूपः परिपाको भवति, यस्मिन्निष्पादिते मेघापाये मयूखमालीव ज्ञानस्वरूपं स्वयं प्रकाशते । तस्मात् सकृदेव पूर्णज्ञानोदयो न त्वंशतः क्रमश इति प्रतिपादितम् ॥

वैदर्भ उवाच—

अभ्यासकाले भगवन् वृत्तिरन्तर्बहिस्तथा ॥
यातायातं प्रकुर्वाणा याते किं ज्ञानमुच्यते ॥४॥

भगवन् महर्षे! अभ्यासकाले साधनसमये वृत्तिरहंवृत्तिरन्तस्तथा बहिश्च यातायातं प्रकुर्वाणा अन्तर्गमनं बहिरागमनं च कुर्वन्ती, यातेऽन्तर्गमनकाले किं ज्ञानमुच्यते?

साधनदशायामहंवृत्तेः सङ्कोचविकासौ भवतः । सङ्कोचे वृत्त्युपसंहारोद्यता आत्मोन्मुखी भवति, विकासे तु वृत्तिविक्षेपपरा बहिर्मुखी भवति । किमहंवृत्तेरन्तराभिमुखत्वमेव ज्ञानं भवतीति प्रश्नः ॥

भगवानुवाच—

अन्तर्याता मतिर्विद्वन् बहिरायाति चेत्पुनः ॥
अभ्यासमेव तामाहु- र्ज्ञानं ह्यनुभवोऽच्युतः ॥५॥

विद्वन्! अन्तर्याता मतिः पुनरायाति चेत् तां मतिं वृत्तिं अभ्यासमेव प्राहुः, न तु ज्ञानम् । हि यतः, अच्युतोऽनुभवो ज्ञानं च्युतिहीनो दृढप्रतिष्ठोऽपरोक्षानुभव एव ज्ञानपदवाच्य इति यावत् । ततः अन्तर्यातबहिरायातदशायां वृत्तेर्यातमभ्यास एव रूढपदम् । साधनमेव तत्, न सिद्धिर्यत्र यातायातकथादविष्ठा नित्या स्वरूपनिष्ठां निर्वृत्तिकाऽपि स्वरूपवृत्तिका पूर्णं भासते ॥

वैदर्भ उवाच—

ज्ञानस्य मुनिशार्दूल भूमिकाः काश्चिदीरिताः ॥
शास्त्रेषु विदुषां श्रेष्ठैः कथं तासां समन्वयः ॥६॥

ज्ञानमेकमेव मुक्तिरेकविधैवेति बहुधा प्रतिपाद्यते श्रीमहर्षिणा । शास्त्राणि तु सप्तभूमिकाप्रतिपादनात् तारतम्यमाहुः । तस्मात् प्रष्टुः संशयः । कथं सोपानपरम्पराणां भूमिकानां ज्ञानस्यैकरूपत्वे समन्वयो भवतीति पृच्छति । मुनिशार्दूल ऋषिश्रेष्ठ! शास्त्रेषु विदुषां श्रेष्ठैर्ज्ञानस्य काश्चिद्भूमिकाः ईरिताः, कथं तासां समन्वय इति योजना । तथा चाहुर्ज्ञानस्य सप्तभूमिकाः सन्तीति । तथा च महोपनिषदि—

"अवबोधं विदुर्ज्ञानं तदिदं साप्तभूमिकम् ।
मुक्तिस्तु ज्ञेयमित्युक्ता भूमिकासप्तकात्परम् ॥"

इत्यारभ्य "....भूमिकाभ्यासात्स्वात्मारामतया दृढम् ॥
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ।
पदार्थाभावना नाम षष्ठी भवति भूमिका ॥
एषा हि जीवन्मुक्तेस्तु तुर्यावस्थेति विद्यते ।
विदेहमुक्तिविषयं तुर्यातीतमतः परम् ॥" इत्यादि ॥

भगवानुवाच—

शास्त्रोक्ता भूमिकाः सर्वा भवन्ति परबुद्धिगाः ॥
मुक्तिभेदा इव प्राज्ञ ज्ञानमेकं प्रजानताम् ॥७॥

प्राज्ञ ! शास्त्रोक्ताः सर्वा भूमिकाः मुक्तिभेदा इव परबुद्धिगाः भवन्ति । प्रजानतां ज्ञानमेकमित्यन्वयः । मुक्तिस्वरूपविचारे 'मुक्तिरेकविधैव स्यात्प्रज्ञानस्याविशेषतः' इति प्रतिपादितम् । एवं ज्ञानस्यैकरूपत्वादेव मुक्तेरैकविध्यम् । भेदस्तु परबुद्धिगः । स्पष्टम् ॥

चर्यां देहेन्द्रियादीनां वीक्ष्यारब्धानुसारिणीम् ॥
कल्पयन्ति परे भूमी स्तारतम्यं न वस्तुतः ॥८॥

आरब्धानुसारिणीं देहेन्द्रियादीनां चर्यां वीक्ष्य परे भूमीः कल्पयन्ति । न वस्तुतस्तारतम्यमिति योज्यम् ॥

यद्यपि ज्ञानिनः कर्मबन्धो नास्तीति प्रागुपपादितम्, तथाऽपि परबुद्धिगतं भेदमपेक्ष्य आरब्धानुसारिणीमिति चर्यायाः विशेषणोपादानम् । अयं भावः । ज्ञानिनो देहेन्द्रियादिव्यापारमितरे जनाः अविद्वांसो दृष्ट्वा, अयं जीवन्मुक्तोऽपि प्रारब्धं भुङ्क्ते, प्रारब्धकर्मणैव शरीरयात्राऽपि सिद्ध्यत्यस्य, इयमस्य षष्ठी ज्ञानभूमिका, अनन्तरमस्य विदेहकैवल्यप्राप्तिः स्यात्, तदैव सम्पूर्णतमज्ञानी भवत्यात्मलयेनेति मन्यन्ते । आहुश्च "एषा हि जीवन्मुक्तेषु तुर्यावस्थेति विद्यते । विदेहमुक्तिविषयं तुर्यातीतमतः परम्" इति । अयं भूमिकाभेदः परबुद्धिगतो, न जीवन्मुक्तगतः । अत्रोपपत्तिः प्रागेव प्रदर्शिता । जीवन्मुक्तः पुरुषो न केनापि व्यवहारेण बाध्यते । सोऽविचाल्यनिष्ठो ज्ञेयः । शास्त्राण्येवाहुः । "जीवन्मुक्ता न मज्जन्ति सुखदुःखरसस्थिते । प्रकृतेनाथ कार्येण किञ्चित्कुर्वन्ति वा न वा ॥ पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् । आचारमाचरन्त्येव सुप्तबुद्धवदुत्थिताः ॥" इति ॥ (महोपनिषदि अ. ७. श्लो. ३७–३८.)

वैदर्भ उवाच—

प्रज्ञानमेकदा सिद्धं सर्वाज्ञाननिबर्हणम् ॥
तिरोधत्ते किमज्ञानात् सङ्गादङ्कुरितात्पुनः ॥९॥

सर्वाज्ञाननिबर्हणं सकलविधाविद्याविध्वंसनं प्रज्ञानमात्मस्वरूपविज्ञानं एकदा एकवारं सिद्धं प्राप्तं चेत् पुनः भूयोऽपि अङ्कुरितात्प्ररूढात्सङ्गात् उदितादज्ञानाद्धेतोः तिरोधत्ते किं, तिरोहितं भवति किम्? ज्ञानोदयात्परं येन केनापि निमित्तेनान्यजनसहवासेन सङ्गो जायेत चेत् तदा ज्ञानोदयात्पूर्वं याऽज्ञानदशाऽभूत् सा पुनरावर्तते न वेति पृच्छति ॥

भगवानुवाच—

अज्ञानस्य प्रतिद्वन्द्वि न पराभूयते पुनः ॥
प्रज्ञानमेकदा सिद्धं भारद्वाजकुलोद्वह ॥१०॥

अज्ञानस्य प्रतिद्वन्द्वि विरोधि एकदा सकृत् सिद्धं प्रज्ञानं प्रकृष्टं सत्प्रत्ययाश्रयस्वरूपज्ञानं पुनर्न पराभूयते न तिरस्कृतं भवति ॥

सिद्धे प्रज्ञाने बन्धमोक्षातीततत्त्वश्रवणात् कुतोऽज्ञानस्य पुनरुद्भवः? आत्मदर्शनात् सर्वकर्मक्षयः सर्वसन्देहध्वंसश्च हि भवतः । कथं पुनः कर्महेतुर्देहात्मबन्धो देहात्माभिमानो वा सम्भवति येनाज्ञानक्षेत्रं फलितं स्यात् ॥

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥"

॥ इति सप्तदशोऽध्यायः ॥

# ॥ अष्टादशोऽध्यायः ॥

कविसार्वभौमोऽस्मदाचार्यो ग्रन्थकृद्भगवतो महर्षेर्माहात्म्यविदां विदुषामाद्योऽस्मिन्नन्तिमाध्याये पञ्चविंशत्या श्लोकैरात्मविद्यागुरुं प्रस्तुत्य, अन्ते षड्विंशेन श्लोकेनामृतनाथयतिप्रश्नस्य श्रीमहर्षेः प्रत्युत्तरं निबध्नाति ॥

वरपराशरगोत्रसमुद्भवं वसुमतीसुरसङ्घयशस्करम् ॥
विमलसुन्दरपण्डितनन्दनं कमलपत्रविशालविलोचनम् ॥१॥

वरपराशरगोत्रसमुद्भवं वरे श्रेष्ठे पराशरस्य वासिष्ठस्य गोत्रे वंशे समुद्भव आविर्भावो यस्य तं, वसुमतीसुरसङ्घयशस्करं वसुमतीसुराणां भूसुराणां विप्राणां सङ्घस्य यशस्करं कीर्तिकरं, विमलसुन्दरपण्डितनन्दनं विमलः शुद्धो गुणेन यशसा वंशेन च सुन्दरपण्डित एतन्नामा तस्य नन्दनं पुत्रं, कमलपत्रविशालविलोचनं, कमलपत्रे पद्मदले इव विशाले विलोचने यस्य तं, तं रमणं भगवन्तं पृष्टवानमृतनाथयतीन्द्र इत्येकोनान्तिमश्लोकेन योज्यम् । एवमेव पुरस्ताद्वक्ष्यमाणानां श्लोकानां चान्वयो बोध्यः । अत्र श्लोके श्रीमहर्षेर्गोत्रस्य जनकस्य च नामनी अभिधाय अस्य विग्रहः शुभलक्षणसम्पन्नाक्षिशालीति प्रस्तुतवान्ग्रन्थकारः । अत्राध्याये प्रथमं श्लोकाष्टकं द्रुतविलम्बितवृत्तनिबद्धम् ॥

अरुणशैलगताश्रमवासिनं परमहंसमनञ्जनमच्युतम् ॥
करुणया दधतं व्यवहारितां सततमात्मनि संस्थितमक्षरे ॥२॥

अरुणशैलगताश्रमवासिनं अरुणाचलनाम्ना विश्रुतं क्षेत्रं गते तत्रस्थे आश्रमे वसन्तं, परमहंसं यतिश्रेष्ठं, अनञ्जनं निर्वेषं निर्लेपं वा, अच्युतं च्यवनरहितं सिद्धस्थितिकमिति यावत्, असत्यपि सङ्गे लोकसम्बन्धाभावेऽपि करुणया कृपया व्यवहारितां लोके विद्वद्भिरविद्वद्भिर्वा व्यवहारोऽस्यास्तीति व्यवहारी तस्य भावः व्यवहारिता तां दधतं बिभ्राणं, सततं नित्यं अक्षरे निश्चले आत्मनि आत्मस्वरूपे संस्थितं निष्ठितं भगवन्तं रमणं पृष्टवान् । आत्मनिष्ठस्यास्य स्वार्थं प्राप्तव्यस्यासत्त्वेऽपि परेषां क्षेमाय तैः सह व्यवहारो भवतीति बोध्यम् ॥

अखिलसंशयवारणभाषणं भ्रममदद्विरदाङ्कुशवीक्षणम् ॥
अविरतं परसौख्यधृतोद्यमं निजतनूविषयेष्वलसालसम् ॥३॥

अखिलसंशयवारणभाषणं अखिलानां आश्रितप्रवृजनसंशयानां वारणं निवर्तकं भाषणं वचनं यस्य तं, भ्रममदद्विरदाङ्कुशवीक्षणं भ्रमोऽयथार्थानुभवो मदद्विरद इव मत्तगज इव तस्याङ्कुश इव वीक्षणं यस्य तं, मदपूर्णो द्विरदः मदद्विरद इति मध्यमपदलोपी समासः । भ्रममदद्विरद इत्यत्र उपमानोत्तरपदकर्मधारयः, अङ्कुशवीक्षण इत्यत्र उपमानपूर्वपदः समासः । अविरतं विरामवर्जं परसौख्यधृतोद्यमं परेषां सौख्ये धृतो गृहीत उद्यमो यत्नो यस्य तं, निजतनूविषयेषु स्वशरीरसौख्यप्रदकार्येषु अलसालसं वीप्सायां द्विरुक्तिः, अत्यन्तमन्दमुदासीनत्वादित्यर्थः । तादृशं रमणं भगवन्तं पृष्टवान् । सर्वेषां संशयघ्नमस्य वचः, भ्रान्तिरस्य दृष्ट्या निवार्यते, सन्ततमन्यसौख्याय व्यवहारः, स्वशरीरसौख्ये त्वौदासीन्यमस्येति भावः ॥

परिणताम्रफलप्रभविग्रहं चलतरेन्द्रियनिग्रहसग्रहम् ॥
अमृतचिद्घनवल्लिपरिग्रहं मितवचोरचितागमसङ्ग्रहम् ॥४॥

परिणताम्रफलप्रभविग्रहं परिणतस्य पक्वस्य आम्रफलस्य चूतफलस्य प्रभेव प्रभा शोभा यस्य स विग्रहो देहो यस्य तं, चलतरेन्द्रियनिग्रहसग्रहं अतिशयेन चलानां चञ्चलानामिन्द्रियाणां निग्रहे नियमने ग्रहेण सह वर्तत इति सग्रहः, जितेन्द्रिय इति यावत् तं, अमृतचिद्घनवल्लिपरिग्रहं अमृता चिद्घनवल्लिः प्रज्ञानघनमयी वल्लिः परिग्रहो द्वितीया यस्य तं, अमृतात्मप्रज्ञाने रममाणमित्यर्थः । अनेन षण्मुखो वल्लीं पर्यगृह्णादिति पुराणकथातत्त्वं द्योतितम् । आचार्यस्य महर्षौ सुब्रह्मण्यदृष्टिः सुप्रसिद्धा । मितवचोरचितागमसङ्ग्रहं मितैरल्पैर्वचोभिः रचितो निबद्धः आगमानां मन्त्राणां तन्त्राणां च सङ्ग्रहः समासो येन तं, अक्षरमणमालारुणाचलाष्टकपञ्चरत्नेषु निगमागमसारः स्फुटो बोध्यः ॥

अमलदीप्ततरात्ममरीचिभि र्निजकरैरिव पङ्कजबान्धवम् ॥
पदजुषां जडभावमनेहसा परिहरन्तमनन्तगुणाकरम् ॥५॥

अमलाः स्वच्छाः नैर्मल्यावहाः, दीप्ततराः अतितरां ज्वलिताः आत्ममरीचयः स्वात्मदीप्तयस्ताभिः पदजुषां निजचरणाश्रितानां जडभावं चित्प्रकाशप्रतिबन्धकं येन हृत्पद्मं मुकुलितं भवति तं अनेहसा कालेन परिहरन्तं व्यपोहन्तम् । सुकृतपरिपाकवतां जडभावः सद्यः परिहर्तुं शक्यते । नात्र चित्रम् । अपक्वस्याप्याश्रितजनस्य स्वप्रभया परिपाकं विधाय जाड्यमपनुदतीत्यतः कालक्रमेणैवेदं निर्वाह्यमित्यनेहसेति कथितम् । एवं च करुणया दधतं व्यवहारितामिति प्रागुक्तमुपपद्यते । अथात्रोपमानमाह । कमिव? "निजकरैः पङ्कजबान्धवमिव" यथा स्वकिरणैः पद्मबन्धुः सूर्यः पद्मानि विकासयति तथेत्यर्थः । इयं च लुप्तोपमा । आत्ममरीचिभिः पदजुषां जडभावपरिहरणं हृदयविकासदानान्नातिरिच्यत इति गम्यते । पुनः कीदृशम्? अनन्तगुणाकरं अनन्तानां नाशरहितानां दयादाक्षिण्यादीनां आकरो निधिस्तमिति स्थूलो भावः । वस्तुतस्तु आत्मवित्पुरुषस्य गुणानामनैमित्तिकत्वादव्याजकरुणादीनां अन्तो नाशो नास्ति । तादृशं सहजानामात्मगुणानां निधिं, तस्मादव्ययसहजात्मसद्गुणराशिमिति भावः ॥

**मृदुतमं वचने दृशि शीतलं विकसितं वदने सरसीरुहे ॥**
**मनसि शून्यमहःशशिसन्निभे हृदि लसन्तमनन्त इवारुणम् ॥६॥**

वचने मृदुतमं न केवलं पारुष्यरहितं किंतु प्रीतिगर्भमृदुलतासम्पन्नं, दृशि शीतलं कारुण्यात्, तापापहदयार्द्रदृष्टिमिति यावत् । सरसीरुहे वदने व्यस्तं रूपकं, वदनाम्बुजे विकसितं, न तु म्लानं मुकुलितं वा । केषाञ्चिज्जडवत्तिष्ठतां पाषाणादि प्रयुञ्जतां उन्मत्तवदाचरतां महनीयानां वदनं बहिर्मुखदृष्टेर्घोरमेव प्रतिभायात् । इह तु अपण्डितस्यापि गोचरो भवति मुखाब्जविकासः । वक्त्रारविन्दे नित्यं हृदयभानोः करप्रसारात् । अहःशशिसन्निभे मध्याह्नचन्द्राभे मनसि शून्यं, यथा दिने चन्द्रः सूर्यातपे लीनो निष्प्रभो दृश्यते तथाऽस्य मनो हृदयज्योतिषि लीनं निर्मूलवृत्तिकं च दृश्यते । तथा चोक्तं हृदयविद्याध्याये, "हृदि सन्निहितो ज्ञानी लीनं हृदयतेजसि । ईक्षते मानसं तेजो दिवा भानाविवैन्दवम् ॥" इति । पुनः कीदृशम्? अनन्ते आकाशेऽरुणमिव सूर्यमिव हृदि दहरे लसन्तं भान्तं रमणमित्युत्तरेणान्वयः ॥

अथ मृदुतमत्वादिविषयभेदेन एकस्यैव बहुधोल्लेखनादुल्लेखालङ्कारः । अदयमात्म-तनावित्युत्तरश्लोकेऽप्युल्लेख एव ॥

**अदयमात्मतनौ कठिनं व्रते परुषचित्तमलं विषयव्रजे ॥**
**ऋषिमरोषमपेतमनोरथं धृतमदं घनचिल्लहरीवशात् ॥७॥**

आत्मतनौ स्वशरीरे अदयं निष्करुणं तत्राभिमानराहित्यात् । अत एव व्रते कठिनं, अपेक्षितेऽपि शरीरयात्रार्थे देहस्योपचारे व्रते तीव्रनियमे कठिनं दृढमचञ्चलमिति यावत् । बाल एव भगवति महर्षौ विजने पाताललिङ्गादाववातेऽस्मिन्ये निराहारविहार-प्रायतया तपोनिष्ठायां तिष्ठति बहूनि दिनानि यातानि तथा मासाश्चेति चरित्रप्रसिद्ध-मेतत् । अतोऽपि कीदृग्वा स्याद्व्रतकाठिन्यम्? विषयव्रजे स्रक्चन्दनादिभोगजाले अलं परुषचित्तं अत्यधिकं परुषं चित्तं यस्य तम् । अलं पर्याप्तौ । विषयव्रजेऽस्य अत्यधिकं पूर्णं चित्तपारुष्यमित्यर्थः । "त्वमपि विततयज्ञः स्वर्गिणः प्रीणयालम्" इत्यादाविव अलंपदं पूर्णवाचकतया बोध्यम् । ऋषिं तत्त्वद्रष्टारं, अरोषं रोषशून्यं, अपेतमनोरथं अपेता अपगता मनोरथाः कामा यस्मात् तं निष्कामम् । घनचिल्लहरीवशात् प्रज्ञानघन-प्रवाहवशाद्धेतोर्धृतमदं धृतो भृतो मदो देहविस्मारको बोधो येन तम् । सुरादिपायिनां देहे यथा मदो भवति, तथा ज्ञानामृतपायिनोऽस्य विषयविस्मारको दिव्यो मादको बोधविशेषो नित्यं भवतीति भावः ॥

**विगतमोहमलोभमभावनं शमितमत्सरमुत्सविनं सदा ॥**
**भवमहोदधितारणकर्मणि प्रतिफलेन विनैव सदोद्यतम् ॥८॥**

विगतमोहं वीतविषयभ्रमं, अलोभं लोभरहितं, अभावनं अविद्यमाना भावना यस्य तं कल्पनारहितमिति यावत्, शमितमत्सरं शमितो मत्सरः अन्यशुभद्वेषो येन तं, सदोत्सविनं नित्यमात्मारामत्वात्, भवमहोदधितारणकर्मणि भवमहोदधेर्जन्मसागरस्य तारणमेव कर्म तस्मिन् अन्यानाश्रितान् जननाम्बुधिं येन कर्मणा तारयति तस्मिन् करुणा-कटाक्षपातरूपे कृत्ये प्रतिफलेन विनैव प्रतिफलमप्रतीक्ष्यानादाय च सदोद्यतं अनवरत-

मुद्यमवन्तम् । अव्याजकरुणया क्रियमाणस्यानुग्रहस्य प्रतिफलं न विद्यते, तस्याप्रतिरूपत्वात् । पर्जन्ये जीवनधारकं वर्षं वर्षति, जगत्प्राणे समीरणे च वाति, आदित्ये प्रकाशं ददाने च किं प्रतिफलं तैरपेक्ष्यते, तेभ्यो दातुं वा शक्यते? एवंस्वभाव एवैष यन्महर्षेर्निरन्तरमन्तर्बहिश्च प्रसरतः प्रभाविशेषस्यान्येषामुद्धरणे सततोद्यमो भवति ॥

माता ममेति नगराजसुतोरुपीठं
नागानने भजति याहि पिता ममेति ॥
अङ्कं हरस्य समवाप्य शिरस्यनेन
सञ्चुम्बितस्य गिरिरन्ध्रकृतो विभूतिम् ॥९॥

नागानने गजवक्त्रे गणपतौ मम माता मदीयेयं जननीति कुमारस्वामिनः कनीयसो भ्रातुरीर्ष्याजनकं बालानां सहजं वचनं भणत्येव नगराजसुतोरुपीठं भजति पार्वत्या उत्सङ्गे उपविशति सति, तर्हि गच्छ याहि मम पिता मदीयो जनक इत्युक्त्वा हरस्य शिवस्याङ्कं समवाप्य, अनेन हरेण शिरसि सञ्चुम्बितस्य आघ्रातमूर्ध्नः आघ्राणमेवेह चुम्बनं, गिरिरन्ध्रकृतः सुब्रह्मण्यस्य विभूतिं कलाविशेषं रमणम् । शिवप्रियो गणपतिः शक्तिप्रियः कुमार इति तत्त्वं बालक्रीडाव्याजेन कथितम् । ॐकारस्वरूपी गणपतिः शक्तिधरः कुमार इति प्रसिद्धेः । वसन्ततिलकावृत्तम् । उत्तरत्र चाषोडशश्लोकमिदमेव वृत्तम् ॥

वेदादिपाकदमनोत्तरकच्छपेशै-
र्युक्तैर्धराधरसुषुप्त्यमरेश्वरैश्च ॥
सूक्ष्मामृतायुगमृतेन सह प्रणत्या
सम्पन्नशब्दपटलस्य रहस्यमर्थम् ॥१०॥

वेदादिपाकदमनोत्तरकच्छपेशैः, वेदादिः प्रणव ॐकारः, पाकदमन इन्द्रो लकारः तस्मादुत्तरो वर्णो वकारः, कच्छपेशः एतन्नामा रुद्रः तद्बीजं चकारः, एतैः ॐ वच इत्यक्षरैः, धराधरः पर्वतो दकारः सुषुप्तिर्निद्राख्यशक्तिर्भकारः, अमरेश्वरः

एतदाख्यो रुद्रः तद्बीजं उकारः 'ड्रु' । एतैर्युक्तैः सूक्ष्मामृता एतन्नामकशक्तिरेकारः तद्युक् तद्युक्तं अमृतं वकारः वे इत्यक्षरेण प्रणत्या नम इति पल्लवेन च सह युक्तस्य सम्पन्नशब्दपटलस्य 'ॐ वचद्भुवे नमः' इति अक्षरसमूहात्मकस्य मन्त्रस्य रहस्यं विद्वद्वेद्यमर्थं वाच्यमर्थं एतन्मन्त्रप्रतिपाद्यदेवतात्मकं रमणम् ॥

कोऽसौ देवो योऽस्मिन्मन्त्रे प्रतिपादितः? अग्निजन्मा सुब्रह्मण्यः । कथम्? 'ॐ वचद्भुवे नमः' ओङ्कारः परंब्रह्म तस्याव्ययत्वात्सर्वाभिर्विभक्तिभिरन्वयः । वचद्भुवे वचतो वाचं विसृजतः अग्नेः । अग्निर्वै वाग्भूत्वा मुखं प्राविशदिति श्रुतिप्रतिपादितात् वागभिमानिनो देवात् भवति जायत इति वचद्भूरग्निजः कुमारस्तस्मै नमः ॥

नायं भौतिकाग्निः, किं तु शाब्दं ज्योतिरिरिति गमयितुं मन्त्रे वचत्पदं अग्नेः प्रयुक्तम् । पर्यायोक्तेन मन्त्रोद्धारस्तन्त्रशास्त्रीयः सम्प्रदायः । तमनुसृत्येहाचार्यः सुब्रह्मण्यमन्त्रमुद्धृतवान् । आचार्येण ग्रन्थकृता श्रीमहर्षेः कुमारकलासञ्जातत्वेन स्तूयमानत्वात् अस्य मन्त्रस्यार्थो रमण इत्युक्तम् ॥

दण्डं विनैव यतिनं बत दण्डपाणिं
दुःखाब्धितारकमरिं बत तारकस्य ॥
त्यक्त्वा भवं भवमहो सततं भजन्तं
हंसं तथाऽपि गतमानससङ्गरागम् ॥११॥

"दण्डं विनैव यतिनं" दण्डरहितं यतिनमपि दण्डपाणिं, अदण्डस्य दण्डपाणित्वोक्तौ विरोधः, कुमारस्य दण्डपाणिपदवाच्यत्वेन तस्य परिहारः । बत विस्मये । दुःखाब्धितारकं दुःखसागरं तारयन्तमपि तारकस्यारिं शत्रुम् । तारकोऽपि तारकारिरिति विरोधः । तारकासुरशत्रुरिति स परिहृतः । भवं संसारं त्यक्त्वा उज्झित्वा भवं सततं भजन्तं, भवत्यागभवभजनयोर्विरोधः, भवभजनं शिवभक्तिरिति परिहारः । हंसं तथाऽपि गतमानससङ्गरागं, हंसस्य पक्षिणो मानससरोवरसङ्गत्याग आश्चर्यकरः, हंसस्य यतिनो वीतमनःसङ्गत्वमिति हंसमानसशब्दश्लेषेण विरोधाभासः ॥

धीरत्वसम्पदि सुवर्णगिरेरनूनं
 वारांनिधेरधिकमेव गभीरतायाम् ॥
क्षान्तौ जयन्तमचलामखिलस्य धात्रीं
 दान्तौ निदर्शनमशान्तिकथादविष्ठम् ॥१२॥

धीरत्वसम्पदि धीरत्वं धीरतैव सम्पत्, तस्यां सुवर्णगिरेर्मेरोरनूनं धैर्ये मेरुतुल्यमिति यावत् । अत्र धृतिरेव धीरता ध्रुवतेत्यर्थः, यतः सूर्याचन्द्रमसावपि मेरुं प्रदक्षिणीकुरुत इत्याहुः । 'गभीरतायां वारांनिधेरधिकमेव' गाम्भीर्ये समुद्रादधिकम् । क्षान्तौ क्षमायां अखिलस्य धात्रीं अचलां भूमिं जयन्तं भुवोऽप्यधिकं क्षमायामित्यर्थः । 'दान्तौ निदर्शनं' बाह्येन्द्रियदमने परेषां प्रतिमानभूतं, 'अशान्तिकथादविष्ठं' इह शमः अन्तरिन्द्रियनिग्रह एव शान्तिः । तदभावशब्दादपि दूरतमम् । धैर्यगाम्भीर्यक्षमादमशमेष्वसाधारणोऽस्य प्रभाव इति भावः ॥

नीलारविन्दसुहृदा सदृशं प्रसादे
 तुल्यं तथा महसि तोयजबान्धवेन ॥
ब्राह्मयां स्थितौ तु पितरं वटमूलवासं
 संस्मारयन्तमचलं तमनूदितं मे ॥१३॥

प्रसादे प्रसन्नतायां नीलारविन्दसुहृदा नीलोत्पलबन्धुना चन्द्रेण सदृशं, तथा तेनैव प्रकारेण महसि तेजसि तोयजबान्धवेन सूर्येण तुल्यं, ब्राह्मयां स्थितौ ब्रह्मनिष्ठायां तु वटमूलवासं, पितरं शिवं दक्षिणामूर्तिं संस्मारयन्तं, अस्य ब्राह्मी स्थितिः "मौन व्याख्याप्रकटितपरब्रह्मतत्त्वं" दक्षिणामूर्तिं अस्मान् स्मारयति । स्मरणालङ्कारः । अन्यत्र स्फुटोपमा । अचलं दृढनिष्ठं, मे मम गणपतेरनूदितमनुजातं कनीयांसं तं रमणम् ॥

यस्याधुनाऽपि रमणी रमणीयभावा
 गीर्वाणलोकपृतना शुभवृत्तिरूपा ॥

संशोभते शिरसि नापि मनोजगन्ध-
स्तत्तादृशं गृहिणमप्यधिपं यतीनाम् ॥१४॥

यस्य भगवतः शिरसि अधुनाऽपि अद्यापि रमणी रतिदायिनी रमणीयभावा रमणीयाः भावाः प्रेमतोषादयो यस्याः सा गीर्वाणलोकपृतना देवसेना शुभवृत्तिरूपा शुभा शिवङ्करी वृत्तिर्बाह्याभ्यन्तरवृत्तिः रूपं यस्याः सा संशोभते विराजते, मनोजगन्धोऽपि न, मन्मथवासनालेशोऽपि न, तत् तस्मात् 'तादृशं गृहिणमपि यतीनामधिपं' सुब्रह्मण्यस्य रमणी देवसेना, तदंशजस्य महर्षेः शिरसि शुभवृत्तिरूपतया शोभते । शुभवृत्तेरात्यन्तिकनिःश्रेयसत्वात् मनोजगन्धस्याप्यसत्ता । एवं सपत्नीकोऽपि यतीनामधिपः, तम् ॥

वन्दारुलोकवरदं नरदन्तिनोऽपि
मन्त्रेश्वरस्य महतो गुरुतां वहन्तम् ॥
मन्दारवृक्षमिव सर्वजनस्य पाद-
च्छायां श्रितस्य परितापमपाहरन्तम् ॥१५॥

वन्दारुलोकवरदं वन्दारवे वन्दमानाय लोकाय वरदं श्रेष्ठदायिनं, वरस्य ईप्सितस्य दातारं वा महतो ज्यायसो मन्त्रेश्वरस्य ब्रह्मणस्पतेः, वेदे ब्रह्मेति मन्त्रनाम, मन्त्राधिदेवता ब्रह्मणस्पतिर्गणपतिरिरिति बोध्यम् । सैषा गृत्समदस्यर्षेर्मन्त्रदृष्टिर्भवति । "गणानां त्वा गणपतिं हवामहे, कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत, आ नः शृण्वन्नूतिभिः सीद सादनम् ॥" इति ॥ तस्य नरदन्तिनो गणपतेरपि गुरुतां वहन्तं पूज्यतां दधानं, पादच्छायां निजाङ्घ्रिच्छायां श्रितस्य शरण्यत्वेनाश्रितस्य सर्वजनस्य परितापमपाहरन्तं मन्दारवृक्षमिव स्थितं रमणम् । वृक्षच्छायया घर्मोपशमः पादच्छायया क्लेशनिवृत्तिः । मन्दारो दिव्यवृक्षोऽभीष्टदायी । पादद्वयं च स्वात्माभीष्टदायकम् ॥

यस्तन्त्रवार्त्तिकमनेकविचित्रयुक्ति-
संशोभितं निगमजीवनमाततान ॥

भट्टस्य तस्य बुधसंहतिसंस्तुतस्य
वेषान्तरं तु निगमान्तवचोविचारि ॥१६॥

यः अनेकविचित्रयुक्तिसंशोभितं नानाविधकौतुकाधायकहेतुवादविजृम्भितं निगमजीवनं वेदस्य प्राणवत् स्थितं तन्त्रवार्त्तिकं एतदाख्यं ग्रन्थं आततान विरचयामास । धर्ममीमांसाशास्त्रस्य मौलिभूतं प्रौढग्रन्थं विरचय्य वेदबाह्यसमयिनः सौगतान् निराकृतवान् । अत एव निगमजीवनमिति ग्रन्थविशेषणम् । वैदिकधर्मस्थापनात्तदन्यसिद्धान्तनिराससिद्धेः । वेदस्य मन्त्रब्राह्मणात्मकत्वात् कर्मकाण्डपरतया वेदार्थविचारिणां पूर्वमीमांसकानां प्राग्रसरः कुमारिलभट्टः । तस्य ग्रन्थो वैदिकसमयस्य जीवनमेवाभूत् । य एवं कृतवान् तस्य बुधसंहतिसंस्तुतस्य पण्डितबृन्दप्रणुतस्य भट्टस्य वेषान्तरं अन्यं वेषं रमणम् । कुमारिलस्य कुमारांशजातत्वं प्राहुः । अत एव तस्य वेषान्तरम् । कुमारिलः कर्मठो मीमांसकः परसमयभञ्जनः । महर्षिस्तु ज्ञानी सर्वसमयसमरसः । अत एव निगमान्तवचोविचारि तस्य वेषान्तरमित्युक्तम् । वेदान्तार्थविचारवान् कुमारिलस्यान्यो वेषोऽयं रमणभगवानिति भावः ॥

वेदशीर्षचयसारसंग्रहं पञ्चरत्नमरुणाचलस्य यः ॥
गुप्तमल्पमपि सर्वतोमुखं सूत्रभूतमतनोदिमं गुरुम् ॥१७॥

यो वेदशीर्षचयसारसङ्ग्रहं वेदशीर्षचयस्य वेदान्तवाक्यसमूहस्य सार एव सङ्ग्रहो यस्मिन् तत् 'गुप्तमल्पमपि' गूढं मितविस्तरमपि सर्वतोमुखं बहुमुखं सूत्रभूतं अरुणाचलस्येश्वरस्य पञ्चरत्नं एतदाख्यं श्लोकपञ्चकं अतनोत् न्यबध्नात् तमिमं गुरुं रमणम् ॥

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

इत्यभियुक्ताः । एवंलक्षणसम्पन्नत्वात् सूत्रभूतमित्युक्तम् । बहुमार्गप्रवेशत्वात् सर्वतोमुखं, योगभेदानां सारतोऽत्रोपपादनाच्च । रथोद्धतावृत्तम् । चतुर्विंशश्लोकं यावत् रथोद्धतैव ॥

**देववाचि सुतरामशिक्षितं काव्यगन्धरहितं च यद्यपि ।**
**ग्रन्थकर्मणि तथाऽपि संस्फुरद् भाषितानुचरभावसञ्चयम् ॥१८॥**

यद्यपि देववाचि संस्कृतभाषायां सुतरामत्यन्तं अशिक्षितं अप्राप्तशिक्षं, काव्य-गन्धरहितं च संस्कृतकाव्यलेशमप्यविदितवन्तं तथाऽपि ग्रन्थकर्मणि ग्रन्थरचने 'संस्फुर-द्भाषितानुचरभावसञ्चयं' संस्फुरतः स्फुरितस्य भाषितस्य वचनस्य अनुचरोऽनुवर्ती भावानां सञ्चयो निवहो यस्य तं रमणम् । अस्य "वाचमर्थोऽनुधावति" इत्यर्थः ॥

गुरुमुखात् पाठशालायां वाऽनधीतगीर्वाणभाषोऽपि, अप्राप्तकाव्यगन्धोऽपि, संस्कृतभाषायां ग्रन्थरचनप्राभवः अद्भुत एवास्य । स्वतः स्फूर्त्या निःसृतां वाचं भावोऽनुगच्छति । लोके तावत् अर्थाविष्कारकः शब्दः । अत एव "अर्थं वागनुवर्तत" इत्याह कविः । महात्मनां ऋषीणां तु विपर्ययेण भवतः शब्दार्थौ । शब्दः स्फुरन्निर्गच्छति, अनन्तरमर्थो भवति । 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' इति आदिकाव्यकृतं प्रति साधूक्तं कविना । एवं महर्षेर्विनिर्गता आद्या संस्कृतवाणी 'हृदय-कुहर' इति श्लोकरूपा । ततः कालान्तरे अरुणाचलपञ्चरत्नमुदितम् । श्रीरमणगीता-निबन्धजन्मनः परं उपदेशसारस्य श्रीमहर्षिणा स्वयं द्राविडवाङ्निबद्धस्य संस्कृतावतारो निर्वाहितः । ग्रन्थेष्वेषु सर्वत्र शब्दसौष्ठवमर्थगाम्भीर्यं भक्तिज्ञानयोगादितत्त्वानां हृदयं सरलपदसन्दर्भश्च विराजन्ते । इदं सर्वमकृतसंस्कृतविद्यस्य गैर्वाण्यां शक्यमभवदिति स्थिते, किमुतास्य बृहन्मेधसः स्वभाषायां द्राविड्यां मधुनिष्यन्दिन्याम्? यत्र हि रसो-त्तरसन्दर्भा अरुणाचलाष्टकादयो मोदाय विदुषां विजयन्ते ॥

**लोकमातृकुचदुग्धपायिनः शङ्करस्तवकृतो महाकवेः ॥**
**द्राविडद्विजशिशोर्नटद्गिरो भूमिकान्तरमपारमेधसम् ॥१९॥**

लोकमातृकुचदुग्धपायिनो जगदम्बिकास्तन्यपानभाग्यवतः शङ्करस्तवकृतो देवा-राख्ये द्राविडवेदे शिवं स्तुतवतो महाकवेः, नटद्गिरः सरस्वतीनर्तनवतो द्राविडद्विज-शिशोः श्रीज्ञानसम्बन्धमूर्तेर्भूमिकान्तरं वेषान्तरं, अपारमेधसं अपारा अनन्ता मेधा

शुद्धा बुद्धिर्यस्य तं रमणम् । शैवसमयाचार्यः सम्बन्धमूर्तिस्तृतीये वर्ष एव शिशुर्देवी-स्तन्यपानेन महाकविर्जात इत्याभाणकम् । तदानीमेव शिवं स्तोतुमारब्धवान् । तदीय-प्रबन्धः शैवद्राविडवेदान्तर्गतः शिवभक्तैर्द्राविडेष्वद्यापि अधीयते गीयते च । तस्य कुमारांशसञ्जातत्वप्रसिद्धेस्तस्य वेषान्तरं महर्षिरित्युक्तम् ॥

भूतले त्विह तृतीयमुद्भवं क्रौञ्चभूमिधररन्ध्रकारिणः ॥
ब्रह्मनिष्ठितदशाप्रदर्शनाद् युक्तिवादतिमिरस्य शान्तये ॥२०॥

क्रौञ्चभूमिधररन्ध्रकारिणः क्रौञ्चपर्वतभेत्तुः सुब्रह्मण्यस्य इह तु भूतले भुवि तृतीयमुद्भवं आविर्भावं रमणम् । अन्यौ द्वौ कुमारिल-सम्बन्धौ । किमर्थोऽयं तृतीय उद्भवः? आह । 'ब्रह्मनिष्ठितदशाप्रदर्शनात्' ब्रह्मणि परमात्मस्वरूपे निष्ठिता या दशा तस्याः प्रदर्शनात् 'युक्तिवादतिमिरस्य शान्तये' तृतीय उद्भव इति सम्बन्धः । चार्वाकादि-वेदान्तान्तशास्त्रीयतर्कोक्तिरूपान्धकारस्य प्रध्वंसायेत्यर्थः । कथमन्धकारेणोपमितो युक्ति-वादः? शास्त्रवादैरेव सर्वं साधितं मन्यन्ते पण्डितंमन्याः । ते चाविद्यायामन्तरे वर्त-मानाः स्वयमविदितपरतत्त्वा अपि परेषां उपदिशन्ति शास्त्रार्थम् । जनाश्चान्धेनैव नीय-माना यथाऽन्धास्ताननुसरन्ति, प्रतियन्ति च शास्त्रज्ञानात्स्वरूपज्ञानं अपरोक्षानुभवो वा नातिरिच्यत इति । तस्मादीदृशी स्वरूपनिष्ठेति निरूपयितुं तृतीय उद्भवः । तच्च ब्रह्मनिष्ठानिरूपणं युक्तिवादान्धितानां जिज्ञासूनां साधूनां महोपकारि भवति तेभ्यः प्रकाशदानेन ॥

कुम्भयोनिमुखमौनिपूजिते द्राविडे वचसि विश्रुतं कविम् ॥
दृष्टवन्तमजरं परं महः केवलं धिषणया गुरुं विना ॥२१॥

कुम्भयोनिमुखमौनिपूजिते अगस्त्यप्रभृतिभिर्मुनिभिर्मानिते द्राविडे वचसि विश्रुतं द्राविडवाण्यां प्रसिद्धं कविं, गुरुं विना आचार्यमन्तरा केवलं धिषणया साहाय्यनिरपेक्षं सूक्ष्मया बुद्ध्या स्वबोधेनेत्यर्थः । अजरं जरारहितं अविकार्यं परं महो ज्योतिर्दृष्टवन्तं रमणम् ॥

अगस्त्यो द्राविडव्याकरणाचार्य इति प्रसिद्धिः । अरुणाचलेश्वरस्य अक्षरमण-माला, अष्टकं, दशकं, नवमणिमाला, पञ्चरत्नं, उपदेशसारः, सद्दर्शनमित्येतानि महार्घाणि द्राविड्यां पद्यकाव्यानि श्रीमहर्षिप्रणीतानि प्रसिद्धानि । अत एव 'विश्रुतं कविं' गुर्वर्थं यं कमपि मानुषं देवं वाऽनाश्रित्य स्वयमेव जगद्गुरुं परं ज्योतिःस्वरूपं स्वरूपलाभेन दृष्टवान् । अतो 'गुरुं विना' ॥

**बालकेऽपि जडगोपकेऽपि वा वानरेऽपि शुनि वा खलेऽपि वा ॥**
**पण्डितेऽपि पदसंश्रितेऽपि वा पक्षपातरहितं समेक्षणम् ॥२२॥**

बालकेऽपि अपरिस्फुटबुद्ध्यां शैशवदशायां वर्तमानेऽपि, जडगोपकेऽपि वा गोप एव गोपकः, जडेऽज्ञे गोपाले वा, नेह वल्लवजातिनिन्दापरोऽयं किंतु लोकोक्तिमनुसृत्य अत्यन्तानभिज्ञताविशिष्टं मानुषं द्योतयितुं कवेः प्रयोगः । वानरेऽपि सततचेष्टितशीले मर्कटेऽपि, शुनि मलिनेऽपि जन्तौ वा, खलेऽपि वा स्वार्थिद्रोहपरे घातुके चोरे वा दुर्जन इति यावत्, पण्डितेऽपि विद्वत्तया विश्रुतेऽपि पूज्ये, पदाश्रिते निजाङ्घ्रिपूजके वा पक्षपातरहितं, एवमुक्तेषु बालकादिषु विविधतारतम्येषु सर्वत्र समदर्शनात् समेक्षणम् रमणम् ॥

विदितमेवैतद्यन्महर्षेर्वानरादिषु नरेष्विवाचरणम् । तादृशं महाप्रभावमस्य कारुण्य-पूर्णं समदर्शनं, यादृशेन स्कन्दाश्रममधितिष्ठति भगवति महर्षौ सर्पमयूरावपि तत्स-न्निधौ विस्मृतजातिवैरावभूताम् । भूतार्थश्चायं विदितस्तत्कालिकपरिचराणाम् । प्रीति-गर्भस्य समदर्शनस्य कचित् क्रूरे सर्पादौ जन्तौ दृष्टफलत्वेऽपि, क्रूरे मानुषजन्तुविशेषे तथैव दृष्टफलकं भवेत्समदर्शनमिति न नियमः । न वा स्थूलतया दृष्टफलकत्वं नियतं लिङ्गं समदर्शनस्य । सर्वत्र भगवतोऽस्य समदृष्टिर्विलसतीति तु ऋजुमतीनां सुप्रत्यक्षम् ॥

**शक्तिमन्तमपि शान्तिसंयुतं भक्तिमन्तमपि भेदवर्जितम् ॥**
**वीतरागमपि लोकवत्सलं देवतांशमपि नम्रचेष्टितम् ॥२३॥**

क्रमेणान्वयः । अयं भावः । शक्तौ सत्यामपि समृद्धा शान्तिरस्य । शक्ति-शान्त्योर्विरोधः स्थूलधियां प्रत्ययः । महर्षौ उभयोः साहचर्यम् । अस्य परभक्तौ सत्यामपि भेदधीर्नास्ति । भक्तौ भेदो भवति । यत्र भगवान् भजनीयो, भक्तो भजति इति भगवद्भक्तभेदो वर्तेतेति साधारण्येनाभिप्रेयते । एवं भक्तेरभेदधियश्च विरोधः । उभयोः साहचर्यं महर्षौ । एवं वैराग्यवात्सल्ययोः परस्परविरुद्धयोः साहचर्यम् । देव-तांशजातोऽप्ययं नम्रचेष्टितः । अत्रापि विरोधः । देवाः आराध्याः आधिकारिकाः नम्याः, न तु नम्राः । एवं परस्परविरुद्धगुणसाहचर्ये भगवति महर्षौ सत्यपि विरोधानां परिहारस्य दृश्यमानत्वात् विरोधाभासाः । परमशान्तेः सर्वशक्तिसमष्टित्वात् शक्ति-शान्त्योरविरोधः । अभेदस्वरूपं भजमानस्य सिन्धोः सागर एव भेदस्याभेदे समन्वयः । देहात्माभिमानमूलविषयवैराग्येऽपि सर्वस्याप्यात्मभूतत्वात् [illegible]-धायिनी प्रीतिरिति वैराग्यवात्सल्ययोः सामरस्यम् । एवं नम्यत्वविशिष्टदेवत्वे सति सर्वा-नुकूलपरमश्रेयःसाधनसेवानिरतत्वरूपं नम्रत्वं, अतो देवत्वनम्रत्वयोरैकत्र विलासेन समरसता ॥

तस्मात् सर्वत्र आपाततः सत्स्वपि शान्तिशक्त्यादिविरोधेषु तेषामाभासत्वं सुगमम् ॥

> एष यामि पितुरन्तिकं ममा- न्वेषणं तु न [illegible] ।
> संविलिख्य गृहतो विनिर्गतं शोणशैलचरणं समागतम् ॥२८॥

एषोऽहं पितुः पालकस्य जगत्पतेर्मम गुरोरन्तिकं समीपं यामि गच्छामि । गच्छतो मम गमनानन्तरं अन्वेषणं न विधीयताम् । क्व गतो बाल इति [illegible]-श्रमः । इत्येवंविधं वचनं संविलिख्य पत्रखण्डे सम्यक् सुन्दराक्षरैरथापि दर्शनीयैर्वि-लिख्य गृहतो गृहात् कुटुम्बावासस्थानात् विनिर्गतमपक्रान्तं, तथा निष्क्रम्य शोण-शैलचरणं अरुणाचलपादं समागतं प्राप्तवन्तं अरुणाचलो जगत्पितैव [illegible] तमुपगत-मिति यावत् । तं रमणम् ॥

इदं चास्य जीवितचरित्रविदां सुविदितम् । अरुणाचलो नाम किमपि बृहद्विचित्रं वस्त्विति काऽपि स्मृतिर्बाल्यात्प्रभृत्येवासीदस्य । बाले चास्मिन् वेङ्कटरामनामनि षोडश-वर्षदेशीये कस्यचिद्बन्धुजनस्य मुखादरुणाचलः क्षेत्रविशेष इति प्रथमं श्रुतवानयम् । अथ कतिपयेषु मासेषु यातेषु सप्तदशे वर्षे प्रचलति गृहवास एव अहमन्वेषणमज्जननिर्वर्तितो घटिकार्धसाधनकालः आत्मस्वरूपसाक्षात्कारः समपद्यत । ततो मासद्वयानन्तरं केनापि निमित्तेन प्रेरणबलेन प्रव्रजितः । प्रव्रजनकाले स्वभाषया द्राविड्या लिखितं पत्रखण्डमेकं कुटुम्बजनस्य स्वनिष्क्रमणं निवेदयितुं अनेन निक्षिप्तम् । तच्च पत्रखण्डं इदानीं पञ्चाशद्वत्सरेभ्यः परमपि महानिक्षेपो रक्ष्यते श्रीमातृभूतेशालयसन्निधाने । इदमेव पत्रखण्डस्थं लिखितम् । तदिह संस्कृतभाषायामवतार्यते—

"अहं मम पितरं मार्गमाणः तस्याज्ञया इदं स्थलं विहाय प्रस्थितोऽस्मि । इदं साधुन्येव कार्ये प्रवृत्तम् । तस्मादस्मिन् कार्ये कोऽपि मा शोचीत् । इदं द्रष्टुं धनव्ययं च मा कार्षीत् ॥ इति .... .... ...."

(तव वेतनं इतोऽपि न दत्तं, रू. २–०–० इतो वर्तते ॥)

उत्तरलिखितं भ्रातरं ज्यायांसमुद्दिश्य पाठशालावेतनं न दत्तमिति निवेदनाय ॥

**ईदृशं गुणगणैरभिरामं प्रश्रयेण रमणं भगवन्तम् ॥**
**सिद्धलोकमहिमानमपारं पृष्टवानमृतनाथयतीन्द्रः ॥२५॥**

अमृतनाथयतीन्द्रः अमृतनाथनामा सन्न्यासी ईदृशं एवं वर्णितलक्षणं गुणगणैः महनीयगुणराशिभिरभिरामं रमणीयं भगवन्तं महर्षिं रमणं प्रश्रयेण विनयेन अपारममेयं सिद्धलोकमहिमानं सिद्धपुरुषाणां प्रभावं पृष्टवान् । सिद्धपुरुषाणां स्वरूपं प्रभावं च निवेदयितुमर्हसि भगवन्निति श्रीमहर्षिं अप्राक्षीत् । स्वागतावृत्तम् । 'आह तं' इत्युत्तर-श्लोकोऽपि स्वागता ॥

**आह तं स भगवानगवासी सिद्धलोकमहिमा तु दुरूहः ॥**
**ते शिवेन सदृशाः शिवरूपाः शक्नुवन्ति च वराण्यपि दातुम् ॥२६॥**

स भगवानगवासी अचलवासी महर्षिः तं अमृतनाथं आह प्रत्युत्तरं पादत्रयेण वक्ष्यमाणम् । 'सिद्धलोकमहिमा तु दुरूहः' तु शब्दोऽवधारणे । सिद्धपुरुषमाहात्म्यं ऊहितुं नैव शक्यं भावनातीतत्वात् सिद्धपुरुषस्थितेः । 'तस्य स्थितिं भावयितुं क्षमः कः' इति सिद्धमुद्दिश्योच्यते । स एव सिद्धपुरुषो यस्य सिद्धिः सर्वासां सिद्धीनां समष्टिर्भवति । सा च सिद्धात्मस्वरूपनिष्ठा यस्यां नित्यं शिवस्वरूपं व्यवहारश्च शिवस्येव भवतः । तदेवोत्तरार्धेनाह । ते सिद्धाः शिवेन सदृशाः । सिद्धत्वे शिवाभेदः सादृश्ये भेदाक्षेपः । नेह विरोधः । सिद्धानामनेकत्वेऽप्येकस्वरूपानुभूतिर्नित्या । एवमेकैकस्यापि सिद्धस्यानुभूतिदृष्टिर्भेदशून्या । व्यवहारे तु शिवसदृशाश्चरन्ति । अत एवाह शिवरूपाः शिव एव रूपं येषां ते। सर्वेषां सिद्धानां शिवरूपत्वमुक्तम् । एक एव परः शिवोऽनेकसिद्धपुरुषद्वारा स्वयमव्यक्तोऽप्यभिव्यक्तो भवति । अत एव "ज्ञानी त्वात्मैव मे मतम्," "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति गीतासु स्मर्यते ॥

अनुभूत्या शिवस्वरूपा व्यवहारेण शिवसदृशाः । अत एव "वराण्यपि दातुं च शक्नुवन्ति ।" कानि वराणि? यानीश्वरात्प्राप्यानि तानि सर्वाण्यपि । कथमीशेन समानास्ते वरदाने? शिवेनैकरूपत्वात्तेषाम् ॥

अपि च लोकव्यवहारेऽपि तेषां शिवसायुज्यसिद्धेः, ईश्वरज्ञानिगतयोरुभयोरिच्छयोर्न विद्यते भेदः । य ईशितुः सङ्कल्पः स एव तेषामपि सङ्कल्पः । तस्मात् वरदानशक्तिः सिद्धानां शिवसारूप्यशिवसादृश्यसिद्धेर्विलसितेति शिवम् ॥

अथास्य गीताशास्त्रस्य व्याख्यातस्य समासतः ॥
स्मृत्युपस्थापनायेह विषयान्सम्प्रचक्ष्महे ॥१॥

उपासनस्य प्राधान्यं स्वरूपं च परा स्थितिः ॥
निर्णीतं प्रथमेऽध्याये काम्योपास्तेश्च यत्फलम् ॥२॥

आर्षवाण्या द्वितीये तु रमणस्य महागुरोः ॥
ब्रह्मात्मभावः सम्प्रोक्तो हृद्यहंस्फुरणात्मकः ॥३॥

जपेन वाऽप्युपायेन स्वस्वरूपावबोधनम् ॥<br>
नरस्य मुख्यकर्तव्यं तृतीये समुदीरितम् ॥४॥

चतुर्थे ज्ञानमुद्दिश्य रहस्यं कथितं महत् ॥<br>
आत्माकारतया वृत्ते- रवस्थानं स्वतःशमम् ॥५॥

प्रोक्ता हृदयविद्याऽथ महर्षेः स्वत उद्धृता ॥<br>
अध्याये पञ्चमे षष्ठे मनोनिग्रहसाधनम् ॥६॥

स्वविचाराधिकारस्य तदङ्गानां निरूपणम् ॥<br>
चातुराश्रम्यधर्मस्य सप्तमाष्टमयोस्तथा ॥७॥

नवमे हृदयग्रन्थि- भेदस्यात्मविचारतः ॥<br>
सङ्घसाङ्घिकधर्मस्य दशमे तु प्रदर्शनम् ॥८॥

एकादशेऽथ सिद्धीनां ज्ञानस्य च परस्परम् ॥<br>
सामरस्यं समासेन रहस्यं प्रतिपादितम् ॥९॥

विचारो द्वादशेऽध्याये सूक्ष्मतः शक्तिशक्तयोः ॥<br>
स्त्रियोऽधिकारः सन्न्यासे पुंसा तुल्यस्त्रयोदशे ॥१०॥

जीवन्मुक्तिविचारस्तु कृतोऽध्याये चतुर्दशे ॥<br>
विवृतं श्रवणादीनां तत्त्वं पञ्चदशे परम् ॥<br>
स्वरूपं षोडशे भक्तेः ज्ञानप्राप्तिरनन्तरे ॥११॥

अष्टादशे तु माहात्म्यं सिद्धानां शिवरूपिणाम् ॥<br>
स्तुतश्च तत्र भगवान् स्वशिष्येण महात्मना ॥१२॥

एवमध्यात्मकामानां पाकभेदानुसारतः ॥
रोचना रुचिभिन्नानां सामरस्यपरिप्लुता ॥१३॥

महर्षिणोपदिष्टेयं नित्यमात्मनि तिष्ठता ॥
अध्यात्मदृष्ट्या सन्दोहं सन्देहानां व्यपोहता ॥१४॥

श्लोकानां त्रिशतैर्वाण्या गैर्वाण्या कविकुञ्जरः ॥
अष्टादशभिरध्यायै- र्गीतामेतां निबद्धवान् ॥१५॥

गुरोर्गणपतेर्भाति वासिष्ठस्य महामुनेः ॥
निबन्धो हारवत्सूत्रे रमणीयार्थभाविते ॥१६॥

व्याख्या प्रभेव तस्येयं प्रसन्ना शुभ्रविस्तरा ॥
भारद्वाजेन कलिता व्रतिनेह कपालिना ॥१७॥

ईशपुत्रशके भूमि- वेदनन्दधरामिते ॥
दशमे मासि दशमे दिवसे शुक्रवासरे ॥१८॥

ध्यानिभिः कृतिभिर्विद्भिः प्रणतैर्नित्यमुज्ज्वले ॥
पावने सन्निधानेऽस्मिन् महर्षिचरणाब्जयोः ॥१९॥

समर्प्यते कृतिरियं सुदिनं मेऽद्य जन्मनि ॥
मातृभूतमहेशाय रमणाय नमोनमः ॥२०॥

इति श्रीमहर्षिरमणभगवत्पादानुध्यात-
श्रीभगवद्वासिष्ठगणपतिमुनेरन्तेवासिनः
भारद्वाजस्य विश्वेश्वरसूनोः कपालिनः कृतिः
श्रीरमणगीताप्रकाशाख्या
व्याख्या
समाप्ता ॥

## ❀ गुरुमन्त्रभाष्यम् ❀

### ॥ प्रथमः पटलः ॥

॥ मन्त्रोद्धारः ॥

वेदादिपाकदमनोत्तरकच्छपेशै-
युक्तैर्धराधरसुषुप्त्यमरेश्वरैश्च ॥
सूक्ष्मामृतायुगमृतेन सह प्रणत्या
सम्पन्नशब्दपटलस्य रहस्यमर्थम् ॥१॥

र. गी. अ. १८. श्लो १०.

वेदादिः प्रणवः । पाकदमनादिन्द्रबीजाल्लकारादुत्तरो वकारः पाकदमनोत्तर उच्यते । कच्छपेशः कूर्मेशनामकरुद्रस्य बीजं चकारः । तैः “ॐ वच” इत्येतैरक्षरैः । धराधरः पर्वतबीजं दकारः । सुषुप्तिर्निद्रानामकशक्तेर्बीजं भकारः । अमरेश्वरः अमरेश्वरनामकरुद्रस्य बीजमुकारः । तैर्युक्तैः “द्भु” इत्येतेनाक्षरेणेति यावत् । सूक्ष्मामृता-[illegible]मेकारः । तद्युक् तद्युक्तं अमृतं तोयबीजं तेन “वे” इत्यक्षरेण । प्रणत्या “नमः” इति पल्लवेन च-सह मिलित्वा । सम्पन्नशब्दपटलस्य “ॐ वचद्भुवे नमः” इति मन्त्रस्य रहस्यं तत्त्ववेत्तृभिरेव ज्ञातुं शक्यम् । अर्थं वाच्यभूतम् । रमणं [illegible] ममृतनाथ[illegible]नीन्द्रः पृष्टवानित्युत्तरेणान्वयः । एवं च भगवतो गुरोर्मन्त्रः “[illegible]” नमः इति पर्यवस्यति । नन्वयं शारदातिलकादिषु तन्त्रेषु स्कन्दमन्त्रत्वेन प्रसिद्ध इति चेत्, अत एव वयं ब्रूमो भगवतो गुरोरेष मन्त्र इति । रमणो हि भगवान्गुरुर्भगवतः सनत्कुमारापरपर्यायस्य स्कन्दस्य कारणगुरोस्तेजोंशावतारः ॥

---

अष्टादशाध्याये ‘वेदादिपाक’ इत्यस्य श्लोकस्य (१० श्लो॰) अनुबन्धतया श्रीवासिष्ठगणपतिमुनिप्रणीतं इदं अत्र प्रकाश्यते ॥

॥ मन्त्रशरीरम् ॥

सोऽयं महामन्त्रो मूलतः षडक्षरो 'वचद्भुवे नमः' इति । सामान्यतः सर्वमन्त्राणामादौ कैश्चित्तान्त्रिकैः प्रयुज्यमानेन प्रणवेन सह सप्ताक्षरो भवति । यथा 'नमः शिवाय' इति पञ्चाक्षरः प्रणवेन सह षडक्षर एवमत्रापि ॥

सर्वस्याश्च देवतायाः चत्वारि रूपाणि भवन्ति । एकमाध्यात्मिकम् । अन्यदाधिभौतिकम् । इतरदाधिदैविकम् । परं मन्त्रात्मकमिति ॥

उत्तरत्रायं निगमो भवति— "वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् ।
इन्द्रात्परितन्वं ममे ॥"

ऋ. ८ मं ६५ सू. १२. ऋ. ६ अ. ५ अ. २७ व.
(सवालखिल्यपक्षे ७६ ॥)

अनया ऋचा ऋषिरिन्द्रस्य मन्त्ररूपां तनुमहं सृजामीत्याह ॥

तान्त्रिकाश्चाहुः— "देशिके मानवभ्रान्तिं प्रतिमासु शिलामतिम् ।
मन्त्रेष्वक्षरबुद्धिं च कुर्वाणो निरयं व्रजेत् ॥" इति ॥

सुप्रसिद्धस्य तत्सवितुरित्यस्य मन्त्रस्य गायत्री देवतेति जनवादश्चात्र लिङ्गम् । गायत्री च मन्त्र एव भवति न काचन स्त्री छन्दोनामत्वात्तस्य पदस्य । किं फलितम् ? भगवतो गुहस्य मन्त्रात्मकं शरीरं षडक्षरमिति पर्यवसन्नम् । अस्मिन्मन्त्रात्मकशरीरपक्षे षडक्षराण्येव षण्मुखानि भगवतः । यथा पञ्चाक्षराण्येव पञ्चमुखानि परमशिवस्य । एवं मन्त्रमयी देवतेति वदन्तो मीमांसकाः सङ्गच्छन्ते ।

॥ सामान्यतो मन्त्रार्थः ॥

ॐब्रह्मस्वरूपाय । ॐकारस्याव्ययत्वात्सर्वाभिर्विभक्तिभिरन्वयः सिद्ध्यति । ॐकारस्य ब्रह्मवाचकत्वमुपनिषत्सु प्रसिद्धम् । वचद्भुवे वचतः वदतः वाक्यानि सृजतः (वागिन्द्रियरूपादग्नेरित्यर्थः) भवतीति वचद्भूस्तस्मै नमः । स्कन्दस्याग्निभूत्वं प्रसिद्धम् ॥

॥ कथं ब्रह्मस्वरूपो देवतात्मा ॥

उक्तः सामान्यतो मन्त्रार्थः। अथ तद्विशेषा विचार्यन्ते। स्कन्दश्च कश्चिद्देवतात्मा। स कथं ब्रह्मस्वरूपो भवति? ब्रह्म च सर्वदेवातीतं परं वस्तु। ननु ब्रह्मणः सर्वात्मकत्वात् स्कन्दस्य ब्रह्मस्वरूपत्वमविरुद्धमिति चेत्, सिद्धः शब्दार्थः। उपासने दोषस्तु भवति। निकृष्टे उत्कृष्टभावनोपासने श्रेष्ठा। नोत्कृष्टे निकृष्टभावना। अत एवाह बादरायणः—"ब्रह्मदृष्टिरुत्कर्षात्" इति। ब्रह्मस्वरूपो गुहो यद्युपास्यः ब्रह्मणि व्यापके व्याप्यगुहदृष्टिः प्रसज्येत। वचद्भुवे गुहस्वरूपाय ॐब्रह्मणे नम इत्यर्थे दोष एष निवार्येत। मन्त्रस्तु गुहस्य न स्यात् ब्रह्मण एव भवेत्। तच्च प्रतिज्ञातविरुद्धम्। एवमुभयथाऽपि संशये प्राप्ते ब्रूमः। अस्तु ब्रह्मस्वरूपाय गुहायेत्येवार्थः। ब्रह्मस्वरूपं यस्य स ब्रह्मस्वरूपः। अपकर्षोत्कर्षभावश्च गुणापेक्षी। निर्गुणे ब्रह्मणि क्वोत्कर्षोऽपकर्षो वा? यथा गुणापेक्ष्येष भावस्तथा भेदापेक्षी च भवति। पूर्णस्य ब्रह्मणः कस्मादुत्कृष्टत्वम्? यदि स एवात्मा सर्वं स कस्मादुत्कृष्टः स्यात्? तस्य चोत्कर्षो विभूतिद्वारा लोकेऽनुभूयते, अपकर्षस्त्वल्पज्ञजीवद्वारा। तस्माद्यथोत्कृष्टमुपाधितो ब्रह्म तथाऽपकृष्टमपि। प्रकृते उपास्यो गुहः उपासको जीवः। उपाधिविरहे तूभावपि ब्रह्मस्वरूपौ। तस्मादभिन्नौ। एवमभेदे किं गुहे स्वात्मानं भावयित्वोपासीत उताहो स्वात्मनि गुहमिति संशये उत्कर्षादात्मनि गुहदृष्टिर्गरीयसीति न्यायो लगति। ब्रह्मदृष्टिरुत्कर्षादिति सूत्रमप्युपासनप्रकरणस्थत्वात्सगुणपरम्। तस्मान्नास्ति कश्चिद्विरोधः॥

सिद्धं मन्त्रे ब्रह्मस्वरूपो गुह उपास्य इति। ब्रह्मस्वरूपत्वं च गुहस्य ब्रह्मणो विश्वात्मत्वात्सिद्ध्येत्। अत्रायमपरः संशयः। यदुच्यते गुहस्याधिदैविकं स्वरूपं भक्तानामनुग्राहकं कालेषु तेजोंऽशेनाविशत्तदर्हानपहतपाप्मनो जीवान्। तत्किं सगुणस्य ब्रह्मणो रूपम्? उताहो कस्यचित्सिद्धपुरुषस्य देवयोनेः? कोऽनयोर्विशेषः? पूर्व ईश्वरो विश्वसमष्टिशरीराभिमानी भक्तानुग्रहाय मायया धृतदिव्यशरीरः। उत्तरो जीवकोटिष्वन्यतमो व्यष्टिभूतो धर्मातिशयात्प्राप्तदिव्यशरीरः। अस्त्वीश्वर एव स्कन्द इति चेदनेकेश्वरापत्तिः इतरासां च देवतानां माहाभाग्ये स्कन्दादविशेषात्। अस्तु जीवेष्वन्यतम इति चेत् निकृष्टः प्रसज्येत। अत्रोच्यते। ईश्वर एव स्कन्दः न जीवकोटिष्वन्यतमः। न

तेनानेकेश्वरापत्तिः लोककार्यार्थं सगुणं ब्रह्म मायया यावल्लोकं रूपाणि बिभ्राणो विश्वं चालयति । सामान्यतः सिद्धपुरुषाणामपि मायया बहुरूपधारणसामर्थ्यमस्ति चेत् ईश्वरस्य किमु वक्तव्यम् ? तेष्वीशस्य मायारूपेषु लोककार्यार्थेषु स्कन्दस्याधिदैविकं रूपमन्यतमत् । तादृशानीशस्य मायारूपाण्याधिकारिकाण्युच्यन्ते । नारायण एक एवेश्वरस्याधिदैविकं रूपमिति वैष्णवाः । परमशिव एक एवेति शैवाः । गणपतिरेक एवेति गाणपताः । सवितैक एवेति सौराः । इन्द्र एक एवेति माहेन्द्राः । यह्व एक एवेति क्रैस्तवाः । ("तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः") इत्यादिवैदिकप्रयोगदर्शनादिन्द्रस्यैव नामान्तरं यह्व इति प्रतिभाति ।) आह्लाद एक एवेति महम्मदीयाः । (चन्द्रमण्डलान्तरपुरुषस्यैवाह्लाद इति नामान्तरं स्यात्प्रायः ।) सुब्रह्मण्य इति स्कान्दाः । एवं विविधमतस्थानां कलहे किं सत्यमिति चर्चायां नागमानामेककण्ठमुत्तरं लभ्येत । तत्रास्मदुक्तरीत्यैव सामरस्येन समन्वयः कार्यः ॥

अत्रायं निगमो भवति—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥"

एकस्येश्वरस्य बहुनामविकल्पा इत्येकः पक्षोऽस्य मन्त्रस्यार्थविचारे । मायारूपभेदवशान्नामभेदकल्पनमित्यपरः पक्षः । उत्तरः पक्ष एव ज्यायान् । तथा हि प्रमाणान्तरसामरस्यं स्यात् । तत्र च तिस्र एव देवता इति नैरुक्तपक्षो ज्यायान् ॥

॥ स्कन्दस्य जनयिताऽग्निः कः ॥

सिद्धं सगुणस्य ब्रह्मणो मायारूपेष्वन्यतमं स्कन्दस्याधिदैविकं रूपमिति । अथ मन्त्रे वचक्नूरित्यनेन योऽग्निः स्कन्दस्य पितोक्तः, स क इत्यत्र विचार्यते ॥

पञ्च तेजांसि लोके । सौरं चान्द्रमसं वैद्युतं पार्थिवं शाब्दं चेति । शब्दश्च तेजोमयं द्रव्यमेव न गुणः । चलनक्रियावत्त्वान्नादगुणवत्त्वाच्च । गुणस्य हि क्रियगुणौ न भवतः । शब्दग्राहकयन्त्रे प्रतिष्ठातश्च शब्दो द्रव्यमवगम्यते । शब्दस्य दूरप्रेषके यन्त्रे

प्रथमं तेजो दृश्यते । अनन्तरं तदेव शब्दो भवति । इदं च शब्दस्य तेजोमयद्रव्यत्वे लिङ्गम् । अत्र निगमाश्च बहवो भवन्ति । उदाहरणार्थं द्वौ मन्त्रौ प्रदर्श्येते ॥

"इमा अभिप्रणो नुमो विपामग्रेषु धीतयः । अग्नेः शोचिर्न दिद्युतः ॥"

ऋ. मं. ८. ६. ७.

अत्र धीतयोऽग्नेः शोचिरिव दिद्युत इत्युच्यते दिद्युतो नाम ज्योतिष्मत्यः । धीतयो वाण्यः ॥

"तं त्वा मरुत्वती परिभुवद्वाणी सयावरी । नक्षमाणा सह द्युभिः ॥"

ऋ. मं. ७. ३१. ८.

अत्र वाणी द्युभिर्नक्षमाणेत्युच्यते । द्यवस्तेजांसि । नक्षमाणा नामयुक्ता ॥

इदं च शाब्दं तेजो व्यापकं शब्दब्रह्मापरपर्यायं परमशिवस्याधिभौतिकं स्वरूपम् । तस्य रुद्र इति वैदिकं नाम भवति । रौति इति रुद्र इति यास्कस्य निर्वचनम् । एतदेव रुद्राख्यं शाब्दं तेजो मन्त्रे वचदित्यनेन कथ्यते । आध्यात्मिकस्य वागिन्द्रियस्य शब्दब्रह्मविभूतित्वान्न वागिन्द्रियशब्दब्रह्मणोर्भेदः । कुमारस्याग्निभूत्वमेतया विधया । तत्राग्निः शाब्द एव न पार्थिवः । मन्त्रे स्पष्टं तत्त्वप्रदर्शनायाग्निभुव इत्यनभिधाय वचद्भुव इत्युक्तम् । अग्निशब्दः पार्थिवे विशेषतः प्रयुज्यमानोऽपि तेजःसामान्यवाचकः । तेनाभिधाने सामान्यस्य स्फूर्तिर्भवति । रुदितः पार्थिवस्य वा विशेषस्फूर्तये वचद्भुव इति वचनम् ॥

॥ नमस्कारार्थः ॥

अथ जपे नमस्कारस्य तात्पर्यमुच्यते । तत्रायं संशयः । किं मन्त्रस्यावृत्तिसमये गुहस्याधिदैविकं रूपं किमपि भावयित्वा तस्मै स्वेन क्रियमाणो नमस्कारश्च भावनीयः, उताहो त्वमुत्कृष्टः अहमपकृष्ट इति बुद्धिरेव नमस्कारस्यार्थः ? उभयं चायुक्तम् । उभयत्रापि प्रतिमन्त्रावर्तनं भेदबुद्धिरेवाश्रयणीया भवति । अनृतमल्पविभवं किमपि रूपं च देवतायाः कल्पनीयं स्यात् । निजस्वरूपं चालक्ष्यं स्यात् । अन्योऽस्त्यर्थस्तृतीयः । नमस्कारश्चायं न स्थूलशरीरस्य, अपि तु सूक्ष्मशरीरस्य । सूक्ष्मं च शरीरं मनः, तस्य च शीर्षं स्थानम् ॥

तदुक्तं भगवता गुरुणा—

"कीर्त्यते हृदयं पिण्डे यथाऽण्डे भानुमण्डलम् ।
मनः सहस्रारगतं बिम्बं चान्द्रमसं यथा ॥"

र. गी. ५. १३.

तच्च मनः हृदयस्थमात्मस्वरूपमन्वेष्टुं अथवा हृदयस्थे निजस्वरूपभूते ज्योतिषि मज्जितुं वा यन्नमति स एव नमस्कारः । उभयत्रापि आत्मस्वरूपे स्कन्ददृष्टिरिति विषयो न विस्मर्तव्यः । एवं च मन्त्रजपः सत्यस्वरूपलक्ष्यः स्यात् । भेदभावनेन च न स्याद्दूषितः । इदं चोपासनद्वयम्— "हृदि विश मनसा स्वं चिन्वता मज्जता वा" (र. गी. २. २.) इति श्लोकपादेन भगवान्महर्षिरुपादिशत् ॥

एवं चात्मनः स्वरूपभूते स्कन्दावतारे भगवति गुरौ मनसा विशामि मज्जामि वेति मन्त्रार्थः पर्यवस्यति ॥

॥ इति प्रथमः पटलः ॥

## अथ द्वितीयः पटलः

### ॥ द्वितीयमन्त्रोद्धारः ॥

अथास्मिन्द्वितीये पटले भगवतस्तान्त्रिकमन्त्रान्तरं व्याख्यायते । तस्यायमुद्धारश्लोकः—

"सुखं कृशानुः कीलालं मूर्धन्यश्चानुनासिकः ।
निद्रा वारि च विख्यातो नाममन्त्रो वचद्भुवः ॥"

सुखं शवर्णः । कृशानुः रेफः । कीलालं जलं वकारः । मूर्धन्योऽनुनासिको णकारः । निद्रा भकारः । वारि वकारः । एतानि षडक्षराणि मिलित्वा "शरवणभव" इति भवन्ति । एतस्यापि मन्त्रस्य षडक्षरत्वेन स्कन्दस्य षण्मुखत्वं प्राग्वद्बोध्यम् ॥

### ॥ द्वितीयमन्त्रार्थः ॥

शराणां तृणविशेषाणां वनं शरवणं तस्माद्भवतीति शरवणभवः । अस्त्राग्निरित्यर्थः ॥

अत्र न शरोपाधिजः साधारणः पार्थिवोऽग्निर्विवक्षितः । तस्य वचन्मूलासम्भवात् या रुद्रस्य तेजोमयं वीर्यं शरस्तम्बे निहितं कुमारोऽभवदिति कथा सा किमपि तत्त्वमवलम्ब्य वर्तते । तच्चेदं तत्त्वम् । रुद्रः शब्दमयः तस्य तेजोमयं वीर्यं च सिद्धास्त्रविद्यस्य महापुरुषस्य सिद्धास्त्रमन्त्रप्रयोगादुत्पन्नोऽग्निः । स च शरोपाधिमवलम्ब्य वर्धमानः शत्रून् हिनस्ति ॥

"विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम् । विद्मो ष्वस्य मातरं पृथिवीं भूरिवर्पसम् ॥"

"ज्याके परि णोन माश्मानं तन्वं कृधि । वीरुर्वरीयोऽरातीरप द्वेषांस्या कृधि ॥"

अथ. सं. सू. २. १–२.

अनयोर्मन्त्रयोर्वण्यमानः शरस्तृणविशेष एव न वेणुमयो लोहमयो वा बाणः । तस्य भूपर्जन्ययोर्मातापितृत्वेन कथनाल्लिङ्गात् । वेणुरपि वनस्पतित्वाद्भूपर्जन्ययोः पुत्रो भवितुमर्हतीति चेत्, तत्रैव वर्गे चतुर्थो मन्त्रस्तं सन्देहं निवारयति ॥

"यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम् ।
एवारोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् ॥"

अत्र मुञ्जशब्देन प्रागुक्तं शरं परामृशति । मुञ्जश्च तृणविशेष एव न वेणुः । अतीव लघुतरस्तृणः शत्रून् हन्तुमस्त्रसम्बन्धं विना कथं शक्तः स्यात्? अस्त्रं च सिद्धमन्त्रमयशब्दोत्पन्नादग्नेर्नातिरिच्यते ॥

"इषीकां जरतीमिष्ट्वा तिल्पिञ्जं दण्डनं नडम् ।
तमिन्द्र इध्मं कृत्वा यमस्याग्निं निरादधौ ॥"

अथ. सं. १२. २. ५४.

इषीकातिल्पिञ्जनडास्तृणविशेषाः । दण्डनं वेणुमयं स्यात् । तेष्विषीका शरतृणस्य पर्यायः । अत्रेन्द्रशब्देन जीव एवोच्यते । 'रूपं रूपं प्रतिरूपो बभूव' इति निगमात् । स चास्त्रवित्सिद्धपुरुषः । स चेषीकाद्यन्यतममिन्धनं कृत्वा यमस्य कालस्याग्निं निरादधौ नितरामासमन्तात्पुष्टवान् । आकाशे स्थितमेव विजृम्भयामासेत्यर्थः । कालश्च शब्दात्

नातिरिच्यते । आकाशे सूक्ष्मं स्वरन्नेव शब्दः सर्वपांचको भवति । अत एवोक्त-मस्माभिरिन्द्रगीते— "सद्व्यापकशक्तिं प्राणं कथयन्ति ।
व्यक्तेतरशब्दं कालं गणयन्ति ॥"

तस्य च कालस्य यमाख्यत्वं रुद्राख्यत्वं च तत्रैवोक्तम्—

"रुद्रं विदुरेके नेतर्बहुलीलम् । प्राहुर्यममन्ये कायं तव कालम् ॥"

इदमुक्तं भवति । आकाशे यः शब्दब्रह्ममयः कालमयश्च रुद्रो व्यापकोऽस्ति । तस्य तेजो मन्त्राग्निप्रेरितं शरोपाधिकमस्त्रं नामाग्निर्भवति । स एव सेनानीर्भगवान् । संहर्ता दानवानाम् । कर्ता देवकार्यस्य । इषीकाशब्दादेव इषुशब्दोत्पत्तिः । अस्त्रं च प्राञ्च इष्वस्त्रमिति व्यवहरन्ति ॥

"इष्वस्त्रमेषां देवत्वं परित्राणं सतामिव ।
भयं वै मानुषो भावः परीवादोऽसतामिव ॥"

एषां क्षत्रियाणामिति परामर्शः । अपि चास्त्रस्येषीकास्त्रमित्येव मुख्यं नामधेयम् । पश्यत रामायणं भारतं च । शरशब्दोऽस्त्रवाचकोऽपि लक्षणयाऽनन्तरं बाणवाचकोऽभूत् । शरशब्द उपलक्षकोऽन्ये [illegible] । प्राधान्याच्छरवणभवेत्युक्तिः ॥

॥ स्कन्दस्य गुरुत्वोपपत्तिः ॥

नन्वेवं चेत्स्कन्दः सङ्ग्रामदेव एव स्यात् । न कारणगुरुरिति चेत् । न सङ्ग्रामदेवत्वं कारणगुरुत्वप्रतिबन्धकम् । प्रत्युतोपकारकम् । यो बहिरस्त्राग्निर्भूत्वा शत्रून्नाशयति । स एवान्तर्विज्ञानज्योतिर्भूत्वा पाशदहनेन तमसः पारं दर्शयति । शाब्दं ज्योतिरेव ह्यन्तर्विज्ञानम् । एतेनैव ज्योतिषा दिव्यचक्षुष्मान् भवति ब्राह्मणः । एतेनैव ज्योतिषा दिव्यास्त्रवान्भवति क्षत्रियः । इदमेव ज्योतिर्ब्राह्मणस्य ब्रह्मत्वम् । इदमेव ज्योतिः क्षत्रियस्य राजत्वम् ॥

॥ इति द्वितीयः पटलः ॥

# ॥ अथ तृतीयः पटलः ॥

## ॥ गुहस्य वैदिको मन्त्रः ॥

व्याख्यातौ गुरोस्तान्त्रिकौ मन्त्रौ । वेदेऽप्यस्य मन्त्राः दृश्यन्ते । तेष्वयं स्पष्टो भगवतो मन्त्रः ॥

"वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव ।
प्रयः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥"

ऋ॰ ७॰ २०॰ ५॰

वसिष्ठ ऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः । वृषा शब्दब्रह्मरूपो रुद्रः वर्षति विज्ञानमिति व्युत्पत्तेस्तस्य वृषत्वम् । वृषणं ज्वालानां वर्षकं देवं रणाय युद्धाय युद्धं कर्तुं इत्यर्थः । जजान उत्पादितवान् । तमु तं देवम् । "उ" इत्यव्ययं स्वसंश्लिष्टस्य नाम्नः औन्नत्यद्योतकम् । नारी चित् देवी शक्तिः । चिदित्यनिर्वाच्यताद्योतकमव्ययम् । नराणामियं नारीति व्युत्पत्तेर्मनुष्येषु गूढा कुण्डलिनी शक्तिरेवात्र नारीपदेनोच्यते । ससूव सुषुवे । तं कीदृशं नर्यं नृषु नेतृषु सिद्धपुरुषेषु भवम् , अयं भावः । सिद्धानां नृणां शरीरे कुण्डलिनी शक्तिः शब्दब्रह्मणः सकाशादस्त्राग्निरूपमिन्द्रं युद्धाय जनयति ॥

यो जातो देवः सेनानीः सेनापतिर्भवति देवानाम् । अध नृभ्यो नेतृभ्यः अस्ति सहायभूतः । इनः स्वामी सत्वा सद्वान् सत्यशक्तिमानित्यर्थः । गवेषणः अन्वेष्टा स प्रसिद्धो देवः धृष्णुः शत्रूणां धर्षको भवति ॥

नन्वत्रेन्द्रः प्रकृतः न सुब्रह्मण्य इति चेत् , नैतत्प्रतिबन्धकम् । इन्द्रनाम साधारणमस्त्राग्नेः । कुमारनाम विशिष्टम् । कथं साधारणम्? कथं विशिष्टम्? तेज इति सूर्यस्य साधारणं नाम । सूर्य इति विशिष्टम् । बलवतां माहाभाग्यवतां भावानामिन्द्र इति साधारणं नाम । विशिष्टानि नामानि तेषां पृथक्पृथग्भवन्ति यथावस्तुतत्त्वम् । सामान्यतो बलस्येन्द्रो देव इति निगमेषु ब्राह्मणेषु च प्रसिद्धम् । अस्त्राग्निश्च सुतरां बलवान्भावः । तस्मात्तस्येन्द्रनामोपपन्नं परमैश्वर्ययोगात् । अयं चास्त्राग्निः सेनानीपद-[illegible] प्रोच्यते विशेषेण । अत्र सर्वत्रान्यत्कारणमुत्तरत्र निवेदयिष्यामः ॥

## ।। इतिहासोपपत्तिः ।।

बलवद्भिर्दानवैर्व्याकुलिते लोके देवैः प्रार्थितो ब्रह्मा, रुद्राद्वीर्यात्समुत्पन्नः कुमारः ताँत्संहरतीति किलोक्तवान् । अनन्तरं कामो देवैः प्रेषितो रुद्रं पुत्रसर्गाभिमुखं कर्तुम् । स च दग्धः । ततो गौरी तपस्तेपे । तपसा सन्तुष्टो गौरीं रुद्रः परिणीय तत्सङ्गाद्वीर्य-मूर्ध्वमार्गेण विससर्ज । तदग्नावप्सु शरस्तम्बे चेति क्रमेण स्थानेषु कृतास्पदमन्ततः कुमारः किलाभवत् । तस्यैवं समन्वयः । मायाबलाल्लोकं बाधमानानसुरजातीयाञ्जेतुं मनुष्यसाधनानि सर्वाणि विफलान्यभवन् । असुरजातीयाश्चात्र मनुष्यविशेषा एव ग्राह्याः । तेन मनुष्यलोके असुराणामेव राज्यं शाश्वतं प्रसक्तम् । देवाश्चासुरक्षपणायास्त्रविद्या-मेतामृषिभ्यो दत्तवन्तः । असुराणां नाशेन पुनर्देवभक्तानां राज्यं भूलोके स्थापित-मासीत् । इयं कथा परोक्षरीत्येतिहासेनोच्यते । तपस्तपति जीवे प्रथमं तपोमाहात्म्येन कामो दग्धो भवति । तपश्च शब्दब्रह्मतेजोनिष्ठेति न विस्मर्तव्यो विषयः । एवं स्वरू-पतो दग्धोऽपि कामो बीजरूपेणावस्थितस्तपसे गौरीं नाम कुण्डलिनीशक्तिं प्रेरयति । कुण्डलिन्या गौरीत्वं च– "पीता भास्वत्यणूपमा" इत्युपनिषदोक्तम् । तन्त्रेषु गौर्याः कुण्डलिनीत्वं सुतरां प्रसिद्धम् । तस्यास्तपसा शब्दब्रह्माऽऽविर्भवति । परवाक्स्वरूप-मनुभवक्षमं भवतीति भावः । यदा शब्दब्रह्मणा मिलिता कुण्डलिनी भूयस्तपति तदा शाब्दं तेज आविर्भावक्षमं भवेत् । तच्च सजातीयमान्तरिक्षं शाब्दं तेजः प्रेरयदस्त्रं भवति । मूलाग्निशीर्षसुधयोः शब्दब्रह्मवीर्यस्य संस्कार एवाग्निगङ्गयोः कतिपयकालस्थितिः । शरस्तम्बे प्रादुर्भावश्च द्वितीयपटले वर्णितः । एते च दानवाः सार्वकालिका एव ग्राह्याः । न नियतकालजाः । इतिहासस्य सार्वकालिकतत्त्वाभिप्रायत्वात् ।।

## ।। कस्तारकासुरः ।।

ननु तारकवधार्थं स्कन्दस्योत्पत्तिः । स च चारित्रिकः पुरुष इति चेन्न । तारका सुरोऽपि तात्त्विक एव । तरति सर्वान्मनुष्यानिति तारको मृत्युः । उभयथा मृत्युं जयति गुहः । प्रमादरूपं संसारहेतुं ज्ञानप्रदत्वेन । शत्रुभिश्चिकीर्षितमस्त्रबलात् । अस्यैव तारकस्य पुत्रास्त्रिपुरासुरा इति पुराणेषु कथ्यते । त्रिपुरासुराश्च त्रिभ्यः पाशेभ्यो नातिरिच्यन्ते । तेषां च पिता प्रमादः । प्रमादश्चात्मनश्च्युतिर्देहे पतनम् । देहात्मभाव इति यावत् ।।

॥ सेनानीः ॥

ननु मन्त्रे यत्सेनानीपदमस्ति तद्देवसेनानीरिति भावं कथं समर्पयेदिति चेत् । देवराज इन्द्रो देवसेनानीरेव प्रकरणाद्भवति । स्पष्टं चेदमन्यत्र मन्त्रे ॥

"इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥"

ऋ॰ १०॰ १०३॰ ८॰

अस्त्रप्रकरणस्थोऽयं मन्त्रः । अपि च मन्त्रे इन इति पदमेवानन्तरं स्वामीति पदं व्यवहरणेऽभूत् ॥

अग्नित्वेनापि स्कन्द उच्यते निगमेषु ॥

"वव्राजासीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः ।
सना अत्र युवतयः स योनीरेकं गर्भं दधिरे सप्तवाणीः ॥"

ऋ ३॰ १॰ ६॰

सप्त वाणीः सप्त छन्दांसि । मन्त्रभवश्चाग्निरस्त्राग्नेर्नातिरिच्यते । आग्नेये सूक्ते दाहकत्वसामान्यादेतस्य वचनम् । न पार्थिवत्वोद्देशेन ॥

॥ व्यक्तिविचारः ॥

अथ व्यक्तित्वधारकं सगुणस्य ब्रह्मणो मायारूपं यत्सुब्रह्मण्याख्यं तद्व्यक्तव्यम् । इन्द्र एव गुहस्याधिदैविकं रूपमिति वदामः । शाब्दाग्नेर्मध्यमस्थानत्वात् । इन्द्रश्चान्तरिक्षलोकपतिः । यदारण्यके इन्द्रं प्रकृत्य सुब्रह्मण्यों सुब्रह्मण्यों इत्युपसंहरति तदेकमत्रलिङ्गम् । इन्द्रस्य सङ्ग्रामदेवतात्वेन वैदिकी प्रसिद्धिश्चात्र लिङ्गं भवति ।

शिवस्य किमाधिदैविकं रूपम्? इन्द्र एव । पितापुत्रयोरभेदापत्तिरिति चेत्, नैष दोषः । गूढशब्दब्रह्मव्यक्तशाब्दाग्न्यपेक्षया भेदनिर्देशः । पितापुत्रसम्बन्धोक्तिश्च । एतेन शिवसुब्रह्मण्यो व्याख्यातः ॥

गणपतेः किमाधिदैविकं रूपम्? इन्द्र एव। भ्रात्रोरभेदापत्तिरिति चेत्, नैष दोषः। सिद्धमन्त्रतत्प्रेरितात्वाग्न्यपेक्षया भेदनिर्देशो भ्रातृत्वोक्तिश्च। मन्त्रो हि प्रथमं शब्दब्रह्मणो जायते। अनन्तरमस्त्वाग्निः। गणपतिना बृहस्पतिब्रह्मणस्पती व्याख्यातौ॥

विद्युतः किमाधिदैविकं रूपम्? इन्द्र एव। अत्रास्ति कश्चिद्विशेषः। विद्युतोऽपि विशिष्टं देवतानामैन्द्रः॥

अन्ये इन्द्रदेवताका आन्तरिक्षा माहाभाग्यवन्तो भावा अत्र विस्तरभयान्नोच्यन्ते॥

॥ अवतारभेदोपपत्तिः॥

इन्द्रो भगवान्येन तेजोंशेनावतरति तस्य विशिष्टं नाम तस्यावतारस्य भवति। वैद्युतांशावतारः इन्द्रस्य स्वपदेन शब्दब्रह्मांशावतारो रुद्रपदेन मन्त्रशक्त्यवतारो गणपतिपदेन शाब्दतेजोंशावतारः स्कन्दपदेन चोच्यन्ते। तत्र गणपतिसुब्रह्मण्यौ भ्रातरौ परस्परसापेक्षौ भवतः॥

एवं सङ्ग्रहेण गुरोस्त्रयाणां महामन्त्राणामर्थ उक्तः। स्कन्दतत्त्वविस्तरस्तु देवतामीमांसायां प्रतन्येत॥

॥ इति तृतीयः पटलः॥

इति श्रीभगवन्महर्षिरमणान्तेवासिनो
वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिर्गुरुमन्त्रभाष्यं
समाप्तम्॥

## ॥ अत्रायमुपसंहारश्लोकः॥

मुनिना श्रीमुखे सिंहे दिने सूर्येन्दुसङ्क्रमे।
सूर्योपरागसमये भाष्यमेतदुदीरितम्॥

## ॥ भाष्यानुबन्धः ॥

(१) शोभनाद्ब्रह्मणः शब्दब्रह्मणो जायत इति सुब्रह्मण्यः ॥

(२) एतेन ब्रह्मगर्भनाम व्याख्यातम् । 'सुब्रह्मण्यो ब्रह्मगर्भः स्वामी शरवणोद्भवः' इत्यमरः ॥

(३) कुमारः नित्यार्भकः उत्पद्य कार्यं कृत्वा पुनस्तिरोहितो भवति । पुनः कार्यकाले प्रादुर्भवति । अतो नित्यार्भक उच्यते । 'अर्भको न कुमारकः' इति निगमोऽत्र भवति (ऐन्द्रे सूक्ते) सद्यो जज्ञानो निरिणाति शत्रूनिति च ॥

(४) एतेन सनत्कुमारनाम व्याख्यातम् । सनत् सदा कुमार इति तत्र व्युत्पत्तिः ॥

(५) सनत्सुजातोऽप्ययमेव । सदा सुजात इति तत्र व्युत्पत्तिः ॥

(६) समानो नन्दनः सनन्दनः । गणपतिना सह रुद्रस्य ॥

(७) सनकः शाश्वतः ॥

एवमेतानि चत्वारि नामान्येकस्यैवोक्तानि । प्रायो विभूतिभेदात् चतुष्टयोक्तिरिति प्रतिभाति ॥



# ॥ शुद्धिपत्रिका ॥

| पार्श्वम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १० | ऊन्मीलित | उन्मीलित |
| ९ | २ | प्रथमाध्यायः | प्रथमोऽध्यायः |
| १९ | ३ | स्वोद्दिष्टोपासन | स्वोद्दिष्टोपासन |
| ,, | ८ | गछेत् | गच्छेत् |
| २६ | २ | सम्प्रकीतितः | सम्प्रकीर्तितः |
| २८ | ५ | केवले | केवलं |
| ३३ | ५ | कारकं गुरोर्वचः | कारकं सन्देह ध्वंसकं गुरोर्वचः |
| ३९ | २० | तदायत्तानलौकि | तदायत्तान् लौकि |
| ४३ | १८ | अथ ज्ञानिनो | अथाज्ञानिनो |
| ४४ | ३ | दृश्यते, | दृश्यते, तथाऽज्ञान दशायां अविदिते हृदये मनोमात्रं दृश्यते । |
| ४४ | ८ | आत्मनः | तेजसो ज्ञानस्य मूलं आत्मनः |
| ४८ | ६ | प्राणरुद्धो | प्राणरुद्धं |
| ५१ | १५ | प्राणेनैवैकतां | प्राणेनेवैकतां |
| ७२ | १५ | स देहमिव | सदेहमिव |
| ७२ | १९ | देहमात्मान | देहमात्मानं |
| ८० | ४ | १९१६ | १९१७ |
| ८० | १४ | १९१६ | १९१७ |
| ८९ | २२ | शारीरे | शरीरे |
| ९० | १९ | वृत्तिविषय | वृत्तिर्विषय |
| १०५ | ९ | स्वरूपवत् । | स्वरूपवत् । तस्य वृत्ति रूपत्वात् आश्रयभूत वत् |
| १०६ | ११ | ज्ञात्रधीनत्वाद- ज्ञानस्य | ज्ञात्रधीनत्वाद् ज्ञानस्य |
| १११ | १७ | तद्देहः | तद्देहः जीवन्मुक्ताया देहः |
| ११३ | १० | अबाध्यमाना | अबाध्यमानता |
| ,, | २१-२२ | निर्ल्यवनी | निर्ल्वयनी |
| ११७ | ५ | कार्यसिद्धि | कायसिद्धि |
| १२६ | ६ | पुरुषस्तमारूढ | पुरुषस्तामारूढ |
| ,, | १७ | परिच्छिन्नं | परिच्छिन्नं देशकालाद्यवच्छिन्नं |
| १३१ | ८ | रूढपदं | नारूढपदं |
| १३२ | २३ | अ· ७ | अ. ५. |
| १३६ | ११ | दयादाक्षिण्या दीनां | दयादाक्षिण्यादीनां गुणानां |
| १४३ | १२ | गंच्छति | च्छति |
| १५२ | २२ | मुपनिष्त्सु | मुपनिषत्सु |
| १५५ | १७ | रुदितः | रूढितः |
| १६० | १५ | शब्दब्रह्माऽऽ | शब्दब्रह्मा |

१२९ पृष्ठे ६ पंक्तेरनन्तरम्— अथास्मिन्नध्याये ज्ञानप्राप्तिं निरूपयति ॥

